"कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थां गते
दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः।
तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः॥"

इत्येवंविधाः सरलसरलाः प्रसादप्रसन्नाः नाट्यसौन्दर्यसंवर्धनपराः सर्व एव श्लोकाः भासस्य कृतिषु समोदं क्रीडन्तः प्रेक्ष्यन्ते। श्रवणमात्रेण कवेः श्लोकाः समस्ताः विदितार्था भवन्ति। तदर्थावधारणे न मनागपि प्रत्यूहः समुपस्थितो भवति। दर्शकः श्रोता वा श्रव्यकाव्ये तु अर्थस्यावगमनमार्गे समुपस्थितं प्रत्यवायं सोढुं शक्नुते परं दृश्यकाव्ये न कदापि। दृश्यकाव्यस्य काव्यत्वं तु तदेवोत्तमत्वेन मतं जायते यदविलम्बमेव तमर्थमवगमयितुं प्रभविष्णु बोभवीति यो हि अभिनेतुरभिलषितः। कवेर्भासस्य श्लोकाः सर्वत्रैव तद्विधाः प्राप्ता भवन्ति यद्विधा नाटकेषु आकाङ्क्ष्यन्ते। संस्कृतनाटककारेषु कालिदास एव भासमतिशेते। तस्य नाटकेषु कविता नाट्यश्रियं येनावदातेन विधिना परिपुष्णाति स विधिर्नितान्तमेवाभिनन्दनीयस्तस्मात् कारणात् कालिदास इव न कोऽपि कदाचित् श्रेष्ठो नाटककारः। परं नाटकेषु कीदृशी भाषा कीदृशाः श्लोकाः कीदृशाः संवादाः सन्निवेशनीया इत्येतद्विषयिणीं कलां कालिदासः स्वप्राग्वर्तिभ्यो भासप्रभृतिकविभ्य एव परिजग्राहेति प्रतिभाति नः। भवभूतिर्महान् नाटककार इत्यत्र न संशयः परं तदीयं कवित्वं श्रव्यकाव्यानुरूपं यावदस्ति न तावद् दृश्यकाव्यानुकूलमतो भासः स्वकीयैः नाटकस्थितैः श्लोकैः प्राबल्येन सहृदयानां हृदयानि रमयतीति मन्ये।

भासस्य तु रूपकाणि विलोक्य स्वान्तं तत्क्षणमेव प्रत्ययमिमं प्रपद्यते यद् रूपकाणीमानि रूपकाणामेव समुत्पादनाय सृष्टान्यभवन् न चान्येन केनापि प्रयोजनेन। रूपकस्रष्टृत्वात् तस्य, तदीया गद्यमयी पद्यमयी च रचना सर्वत्र मानवमानसमनायासेन नन्दयति।

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्ययाद्,
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः।
भूयिष्ठं कपिलानि गोकुलधनान्याक्षेत्रवत्यो दिशो,
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः॥

कवेरयं श्लोकः प्रशान्तस्य तपोवनस्य श्रियमस्मत्पुरः प्रादुर्भावयन् समुपतिष्ठति। निशम्यैव श्लोकमिमं न केवलं तपोवनस्य वर्णनमिदमिति ब्रुवाणो हि पाठको दर्शको वा दृष्टो भवति अपि तु तपोवनस्य सुन्दरतां पावनतां दिव्यताञ्च अनुभवन् शान्तिञ्च ततो विन्दमानः समवाप्तः सञ्जायते।

भासस्य गिरा सूक्तिरिव मनः प्रमोदयति। तत्र सत्यं गम्भीरानुभूतिश्च लोकस्य वीक्ष्येते। सा दुरूहमपि भावं सरलतयैव प्रभावशालिन्या रीत्या प्रकटीकर्तुं क्षमते। न तत्र भाषायाः प्रवाहः क्वापि प्रतिहतो भवन् संलक्ष्यते। दृश्यताम्—

सुखमर्थो भवेद् दातुं सुखं प्राणाः सुखं तपः।
सुखमन्यद् भवेत् सर्वं दुःखं न्यासस्य रक्षणम्॥
गुणानाञ्च विशालानां सत्काराणां च नित्यशः।
कर्तारः सुलभा लोके विज्ञातारश्च दुर्लभाः॥

भासस्य गद्ये विचित्रमेव वैलक्षण्यं विलसति। सन्ति यद्यपि वाक्यानि लघुलघूनि परं तानि सन्ति मनोज्ञभावार्द्राणि। न तत्र कृत्रिमताया लवोऽपि। सर्वत्र स्वाभाविकता शोभते—

(क) अहमपि नाम उत्सारितव्या भवामि। (ख) परिश्रमः तथा खेदं नोत्पादयति यथाऽयम्। (ग) आर्यपुत्रोऽपि परकीयः संवृत्तः। (घ) आर्यपुत्रस्य विश्रामस्थानभूता इयमपि नाम पद्मावती अस्वस्था जाता। (ङ) आर्यपुत्र-पक्षपातेन अतिक्रान्तः समुदाचारः। (च) धर्मप्रिया नृपसुता नहि धर्मपीडामिच्छेत्। (छ) तपस्विषु कुलव्रतमेतदस्याः। (ज) हला, मा मैवं, सदाक्षिण्य एव आर्यपुत्र य इदानीमपि आर्याया गुणान् स्मरति।

अस्थाने न भवति कस्यापि पदार्थस्य शोभा। दीर्घदीर्घतरसमासानां प्रयोगस्य क्षेत्रं नास्ति नाटकम्। नाटके तु भाषा सुबोधैव भाति। क्लिष्टसमासबहुलभाषा अर्थावधारणे विघ्नमुत्पादयति, वैरस्यञ्च जनयति। तस्मात्कारणाद् भासस्तामेव भाषां प्रयुनक्ति स्वनाटकेषु यया नाटकश्रीः उत्कर्षमासादयति। तदीया समासवती पदावली अपि नाट्यगौरवे स्वदृष्टिं निदधानैव प्राप्यते। दृश्यताम्—

चल-विलुलित-मौलिः क्रोधताम्रायताक्षो
भ्रमरमुखविदष्टां किञ्चिदाकृष्य मालाम्।
असिततनुविलम्बिस्रस्तवस्त्रानुकर्षी
क्षितितलमवतीर्णः परिवेषीव चन्द्रः॥

अत्र यद्यपि सन्ति समासाः परं न ते अर्थबोधनमार्गे नाटकद्रष्टुः पुरः प्रत्यूहकणमपि उपस्थापयन्ति ।

अधो यः श्लोकः समुद्ध्रियते तत्र प्रयुक्तोपमा कवेर्मनोविज्ञानविषयिणी ऊहा प्रतिलक्ष्यते किञ्च तदीया मधुरता विह्लणस्य चौरपञ्चाशिकां स्मारयति—

अद्यापि हस्तिकर-शीकर-शीतलाङ्गीं
वालां भयाकुलविलोल-विषादनेत्राम् ।
स्वप्नेषु नित्यमुपलभ्य पुनर्विबोधे
जातिस्मरः प्रथमजातिमिव स्मरामि ॥

(अविमारकम्)

इह चौरपञ्चाशिकातोऽपि श्लोक उद्ध्रियते येनोभयोरपि पद्ययोर्मध्ये समानभावेन निमज्जन्ती मधुरता आस्वादविषया भवेत्—

अद्यापि तामविगणय्य कृतापराधं
या पादमूलपतितं सहसा गलन्तीं
वस्त्राञ्चलं मम कराग्निजमाक्षिपन्तीं
मामेतिरोषपरुषं ब्रुवतीं स्मरामि ॥

भासस्य संवादा भवन्ति श्रवणीयाः। नैसर्गिकतालिङ्गितत्वात् प्रवाहपूर्ण-भाषास्थितत्वाच्च तेषां, ते श्रोतॄणां मनांसि भृशं प्रीणन्ति—

दुर्योधनः—कथं कथं दायाद्यमिति,

वने पितृव्यो मृगया-प्रसङ्गतः कृतापराधो मुनिशापमाप्तवान् ।
तदा प्रभृत्येव स दारनिःस्पृहः परात्मजानां पितृतां कथं व्रजेत् ॥

वासुदेवः—पुराविदं भवन्तं पृच्छामि—

विचित्रवीर्यो विषयी विपत्तिं क्षयेण यातः पुनरम्बिकायाम् ।
व्यासेन जातो धृतराष्ट्र एष लभेत राज्यं जनकः कथं ते ॥

भासो मानव-हृदय-विकारावबोधने परमप्रवीणतामधिगच्छति। बाह्य-प्रकृतिवर्णनपद्धतापि तत्र ललिता वीक्षिता भवति। अलङ्कारेषु स उपमायां स्वभावोक्त्याञ्च नितरां स्नेहं निदधानश्च प्रतिलक्ष्यते। चरित्रचित्रणे तस्य कुशलता नितरामेव श्लाघनीया वर्तते। कवे इमे सर्वे गुणास्तस्य कृतिषु स्पष्टमेव विलोकिता भवन्ति। पात्राणि तदीयानि न शार्करक्रीडनका इव। तानि तु सन्ति

असुमन्ति। तेषां व्यक्तित्वमस्ति अविस्मरणीयं तानि एकैकानि स्वप्रभावं जने जने स्थापयितुमर्हन्ति। को हि जनस्तदीयं—

वनगमननिवृत्तिः पार्थिवस्यैव तावद्
मम पितृपरवत्ता बालभावः स एव।
नवनृपतिविमर्शे नास्ति शङ्का प्रजाना-
मथ च न परिभोगैर्वञ्चिता भ्रातरो मे॥

ताते धनुर्न मयि सत्यमवेक्षमाणे
मुञ्चानि मातरि शरं स्वधनं हरन्त्याम्।
दोषेषु बाह्यमनुजं भरतं हनानि
किं रोषणाय रुचिरं त्रिषु पातकेषु॥

इत्येतादृशोच्चचारित्र्यचारुं रामं विस्मर्तुं प्रभवति? उदयनश्च स्वगम्भीरतया स्वधीरोदात्ततया च सर्वेषां मनोनिकेते अनायासेनैव प्रविशति। यौगन्धरायणस्य बुद्धिमत्ता लोकचातुरी च न कस्य मानवस्य मानसमावर्जयति। तदीयांस्तांस्तान् गुणान् प्रेक्ष्य को न जनस्तत्र प्रीतिं निबध्नाति? कवेः स्त्रीपात्राण्यपि अद्वितीयान्येव सन्ति। येन सकृदपि कवेरस्य वासवदत्ता दृष्टा वा पद्मावती प्रेक्षिता न स कदापि द्वे अपि ते विस्मर्तुं शक्नोति। वासवदत्तायां कविना यदौदार्यं यच्च पातिव्रत्यं चित्रितं यश्च तत्र समुदाचारः प्रदर्शितः तत्सकलमपि वैशिष्ट्यं स्मारं स्मारं मनः परामेव मुदं गच्छति। पद्मावत्याः शालीनता तस्याः शीलं मार्दवं च हृदये स्वीयस्थायिप्रभावं निपातयन्ति। पति-कल्याणाय वासवदत्ता यस्य हि त्यागस्य परिचयं प्रददाति सः अनुकरणीयः स्पृहणीयश्च वर्तते। तदीयं तद्विधं चरित्रं नारीजगत्या भालमुन्नमयति। सा हि वासवदत्ता पद्मावत्यां भगिनीवाचरति न तत्र स्नापत्न्यजनिता सङ्कीर्णता स्वल्पापि। तदीयस्य हृदयस्य ह्येषा परमोदारतैव अस्माकं समक्षे तदा साकारा भूत्वोपतिष्ठते यदा वयं पद्मावतीमुदयनस्य प्रेयसीत्वेन पश्यामः। अविमारके कुरङ्ग्याश्चरित्रमपि नितान्तमेव मधुरमालिखितमवाप्यते। तत्र या भावुकता-सुधा कविना सर्वतः उदञ्चिता तां निपीय को नात्मानं धन्यं मन्यते। वस्तुतश्चरित्र-चित्रणे कविर्नाट्यकलामद्भुततयैव चित्रयति स्म। स तत् प्रेम वर्णयति यत्र शुद्धता विशदता च राजेते। स्वप्नवासवदत्ते नाटकीजानां घटनानां यां मनोभिरामां सङ्गतिं सः अवतारयति स्म सा तु सर्वथैव अद्वितीया अपूर्वा च।

भासस्य नाटकेषु मानवजीवनस्य विविधानि बहूनि च चित्राणि दृग्गतानि भवन्ति। तस्मात् तदीयानि नाटकानि मानवलोकस्य कृते नितान्तमेव हितं सम्पादयन्ति। न तत्र वर्णनं प्रचुरमस्ति न च कथावस्त्वेवातिविस्तृतमस्ति अतस्तानि रङ्गमञ्चे सम्यग् अभिनेतुं योग्यानि सन्ति। सर्वत्र च तत्र नानारसानामुन्मीलनं दृश्यते। नाट्यकलादृष्ट्या न तेषु कोऽपि दोषो दृग्गतो भवति। तत्र वस्तु, नेता, रस इत्येतानि त्रीण्यपि तत्त्वानि मञ्जुलानि समुचितान्येव शोभन्ते।

भासं कविः कालिदासः शूद्रकश्च विशेषतोऽनुचक्रतुः। कालिदासस्य भासस्य च रूपकेषु भावसाम्यं संविधानसादृश्यं च पर्याप्तमवाप्येते। शूद्रको मृच्छकटिकं प्रणेतुं भासस्य चारुदत्तमशिश्रियत्। तदीयं मृच्छकटिकं चारुदत्तस्यैव बृहत्तरं रूपमस्ति।

यदा वयं शाकुन्तले चतुर्थेऽङ्के वृक्षलतादिकं प्रति शकुन्तलायाः कोमलान् भावान् ईक्षामहे तदा स सन्दर्भो भासस्य अभिषेकनाटकीयं तं सन्दर्भं संस्मारयति यो हि मन्दोदरी-भावभङ्गिभिर्विभूष्यमाणोऽस्ति। स्वप्नवासवदत्तस्य 'विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्ययाः।' इत्येतद्विधाः पङ्क्तयः शाकुन्तलस्य 'विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः' इत्येतादृशीः पङ्क्तीः सानन्दं स्मृतिपथे समारोपयन्ति। इत्थं भास-कालिदासयो रूपकाणि परस्परं भावे संविधाने च सान्द्रं साम्यं निदधानानि प्रायेण दृग्गोचरीभवन्ति।

वस्तुतो भासो रूपककारेषु हि अतिद्वयीमेव श्रियं बिभ्राणो शोभतेतराम्। तमुद्दिश्य सत्यमेवोक्तम्—

"सुविभक्तमुखाद्यङ्गैर्व्यक्तलक्षणवृत्तिभिः।
परेतोऽपि स्थितो भासः शरीरैरिव नाटकैः॥"

( २५ )

## कालिदासः

पितुः परमात्मनोऽसीमयानुकम्पया संस्कृतवाङ्मये साम्प्रतमपि काव्यानां या संख्यावशिष्यते सापि नास्त्यविशाला। तस्यां विशालायां संख्यायां विद्योतमानानि सर्वाण्यपि काव्यानि रमणीयरमणीयतराणि पर्यवलोक्यन्ते। न तेषु एकतममपि काव्यमेतादृशं यस्य साहित्यिकं महत्त्वं साहित्यसंसारे न स्यात् कस्मिंश्चित् काव्ये चेत् शब्दानां रमणीयता प्राधान्येन परिस्फुरति त्वन्यस्मिन् शब्दार्थयोरुभयोरपि लोकभावनं पावनं स्वरूपं परिलसति; क्वापि भावानां भव्यता विभाति तु क्वापि चारुचमत्कल्पनाः क्रीडन्ति यदि क्वचिद् दुर्बोधानां श्लिष्टक्लिष्टानां पदानां पुष्कलता प्रफुल्लति तु क्वचित् अलङ्काराणां प्रौढप्रभावाच्छटा वितनुते; कस्मिंश्चिद् यदि गम्भीरा वाग्मिता प्रोल्लसति स्फारस्मेरा तु कस्मिंश्चिदन्यैव कापि दिव्या लक्ष्मीर्विलसति। तदेवं हि सर्वाण्यपि काव्यानि सन्त्यनुपमान्यतुलनीयानि च प्रायेण। तेषां सर्वेषामपि काव्यानां मध्ये कालिदासकृतानि काव्यानि स्वकीयानन्यलब्धवैशिष्ट्येन स्वीयसर्वविजयिना गुणनिकुरम्बमहिम्ना नैजनिखिललोकरञ्जनकुशलेन प्रकाशेन च श्रेष्ठानि सन्ति। इदमेवं कारणं यत् समग्रमपि जगत् कविकुलशेखरं कालिदासं—

"पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥"

"पुष्पेषु जाती नगरीषु काञ्ची
नारीषु रम्भा पुरुषेषु विष्णुः
नदीषु गङ्गा क्षितिपेषु रामः
काव्येषु माघः कविकालिदासः॥"

इत्यादिशतशतप्रशंसामयैर्वचनैरहर्निशं प्रशंसन्तश्चिरादाकर्ण्यन्ते। कस्मात् कारणात् कालिदासः प्रभूततमां लोकप्रियतां भजते कस्माच्च कारणात् स एव कव्यन्तरानधिगतकीर्त्तिमश्नुत इत्येतद्धस्ति विचारणीयमेव। अपि, किं यादृक्

कालिदासो विद्वान् आसीत् न तादृक् कविषु कश्चिदपि विद्वान् आसीत्; किं स एव नानाशास्त्रपारावारीणो बभूव, न कवीनां मध्ये कश्चिदन्यः कविर्नानाशास्त्र-निष्णातः सञ्जातः? वस्तुस्थितिरेषा न, कालिदासादपि विदुषो विद्वत्तराः किञ्च नानाशास्त्रेषु गम्भीरतरां निष्णाततां निदधानाः कवयोऽन्ये बहवो विलोक्यन्ते। ते सर्वं एव स्वकीयं वैदुष्यप्रतापमेव लोके आरोपयितुं प्रयतमानाः प्राप्यन्ते, प्रायेण तेषु भूयिष्ठा जन-समाजे स्वीयं प्रभावमेव विशेषेण संस्थापयितुमुत्सुका लभ्यन्ते न ते जनतायाः सविधे प्रयाय तया सह स्थातुं भोक्तुं पातुं गातुं वक्तुं हसितुं विलपितुं शयितुं जागरीतुं च स्वमानसे उत्कटां कामनां निदधानाः अधि-गम्यन्ते। ते सरलायां सुबोधायां गिरायां स्वं भावं जनवृन्दस्य पुरतः स्थापयितुं न चेष्टमाना वीक्ष्यन्ते, तेषां कथनस्याभिव्यक्तिर्न साधारणजनसमुदायं प्रति सम्मानभावनां निदधाति, ते एतादृशीं रचनां समुपन्यस्यन्ति या मानवानां मस्तिष्के तु स्वकीयमाश्चर्यकरं प्रभावं समारोपयति परं न तेषां हृदये स्वीया-त्मीयता-बिन्दुमपि क्षरति; ते लोकस्य तु बुद्धितत्त्वमावर्जयितुमभिलषन्ति परं हृदयतत्त्वं मनागेव अथवा अल्पमेव स्पृशन्ति—इत्यादीनि सन्ति कारणानि बहूनि यद्वशात् न ते तद् यशस्तां श्लाघां तां प्रतिष्ठाञ्च गाहमाना दृष्टा भवन्ति यद् यशो यां श्लाघां याञ्च प्रतिष्ठां कालिदासो विन्दमानो वीक्ष्यते। कालिदासः संसारं सेवितुं जनुर्जग्राह। सः स्वकीयानि काव्यानि सर्वेषामेव कृते—बुधवराणा-मबुधानाञ्च कृते—ससर्ज। सः स्वकीयवैदुष्यस्य प्रतिष्ठापनाय काव्यानि न चकार स तु लोकाराधनाय—लोक-कल्याणाचरणाय—नैजरचनां रचयामास। स तां भाषां प्रयुयोज या जनताया विद्वन्मालायाः—उभयोः—अपि मानसमाव-र्जयति। स जनतायाः सकाशे स्वीयं विद्वत्तेजोऽसह्यं वितनितुं न गतः अपि तु सः "अहं तवैव" इत्येतामात्मीयतां निधातुमुपस्थितोऽभवत्। तस्य भावाभि-व्यक्त्यां मधुरता सरलता निरभिमानभावो हृदयाकर्षणनैपुणी च विराजन्ते—इत्यादीन्यनेकानि सन्ति कारणान्येवंविधानि यद्धेतोः सः—

> "अस्पृष्टदोषा नलिनीव दृष्टा हारावलीव ग्रथिता गुणौघैः।
> प्रियाङ्कपालीव विमर्दहृद्या न कालिदासादपरस्य वाणी॥"

इत्यादिप्राज्यप्रशंसानां स्पृहणीयानां समवाप्तेः सौभाग्यमुपभुनक्ति।

वस्तुतो न शब्दानामाडम्बरो, न चित्रता, नालङ्कारप्रचुरता, न वर्णना-नामतिशयविस्तारो न दुर्बोधा वाक्यावली, न समासानां भूयस्कता न कठोरा

ऊहा, न च वाचकवाच्यविषयिणी पीनतैव काव्यत्वमादधाति परं तदाधानस्य कारणमन्यदेव किमपि भवति । अत एव तु ध्वन्यालोककारः प्राह—

"प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत् तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ।"

इयमुक्तिः कालिदाससदृशद्वित्रिकवीन् लक्ष्यीकृत्यैव निर्गदिता आनन्दवर्धनेन । कालिदासस्य काव्येषु नैतिकताया उज्ज्वलतमं रूपं, श्रेयःप्रेयसोः समीचीनः समन्वयः, आत्मतत्त्वस्य हृदयङ्गमं स्वरूपं, जीवननिर्माणकारिणामाचाराणां दिव्यैव चारुता सर्वत्र उत्तरला भूत्वा प्रवहति । एवंविधवैशिष्ट्यविद्योत्यमानत्वात् तेषां, जगती यावन्मात्रायां तत्र रमते न तावन्मात्रायां सा भारविभवभूतिमाघश्रीहर्षादीनां कवितायाम् ।

अस्मदीयस्यैतस्योदीरणस्यायं भावो, न कदापि यद् भारविभवभूतिप्रभृतीनां कवीनां काव्येषु सत्यशिवसौन्दर्य्याणां श्रीर्न शोभते तत्रापि सा सम्यगेव विभ्राजते परं तस्या उद्भावनाय यादृशी नैसर्गिकी भाषा कालिदासेन स्वीकृता अभिव्यक्तिविधा यादृशी तेन शरत्पूर्णेन्दुचन्द्रिकेवाह्लादिनी समुज्ज्वलाऽविर्भाविता, प्रकृतेर्यादृशं समन्वयतासम्भावितमुपपन्नं निरूपणं तेन विशदीकृतं भारतीयसंस्कृतेस्तदीयप्राक्तनपरम्परायाश्च चित्ताकर्षकं यादृशं मधुरमुन्मीलनं तेनाभिनीतं, गुणरीतिवृत्त्यलङ्कारादीनां सम्भारो यादृश्योचितया सीमया तेनोपात्तं ससारेण परिमितेन च वाचानिचयेन यादृशं मनोमेधारञ्जनं शुचितरं वर्णनं तेन कृतं नान्यः कोऽपि कविस्तथाविधंन्तत्सर्वं प्रदर्शयन् संलक्ष्यते ।

कालिदासस्य काव्येषु सञ्चरमाणा सुन्दरता याभिर्विशिष्टताभिः अन्येषां कवीनां काव्यगतानि सौन्दर्याणि अतिशेते ताः प्रदर्शयितुमिह प्रयासो विधीयते ।

महाकविः कालिदासो महाकाव्यद्वयं लिलेख कुमारसम्भवम्, रघुवंशञ्च । कुमारसम्भवं कालिदासस्य कलायाः सुन्दरसृष्टिरस्ति । मञ्जुलभावाभिव्यञ्जनकारित्वादुदात्तसुकोमलकल्पनाकलितत्वात् प्राञ्जलपदविन्यासविलसितत्वाच्च काव्यं कुमारसम्भवमाधुनिकरुचिं नितान्तं परिप्रीणाति । कवेर्वर्णनशक्ते रूपं तत्र चारुतरं भवत् प्रेक्षणपथेऽवतरति। कामदहन–पार्वतीतपस्या–शिव-पार्वतीपरिणयादिकथावस्तुमूले वासनाजनितक्षणभङ्गुरप्रेम्णः फलं दुःख–क्लेशपरम्परां विहाय नान्यत् किमपि। कामवासनानां दाहमन्तरेण पारमार्थिकप्रेमाधिगमनं न कदापि सम्भवम् ।

तपश्चर्ययैव मनसः शुद्धिर्भवति प्रेम्णि च परिनिष्ठितत्वमुत्पद्यत इत्येषः अमर-सन्देशः कवेः समग्रमपि विश्वम्प्रति प्रतिष्ठितस्तत्रास्ति।

महाकाव्ये रघुवंशे दिलीपरघुप्रभृतीनां सूर्यवंशोद्भवानां नृपवराणां चरित्राणि चित्रीकृत्य कविर्देवेषु विप्रेषु गुरुजनेषु भक्तिभावं निधातुं गां सेवितुमतिथिं संमानयितुं त्यागार्थं धनं संग्रहीतुं लोकानुरञ्जनाय राज्य-भारं वोढुं विषयेषु स्वामित्वं स्थापयितुं जीवनमुन्नमयितुं योग—साधनयात्मानं द्रष्टुं च मानवसमाजमादिशति सस्नेहम्।

कविः कालिदासो यमपि भावं चित्रयितुमिच्छति तं न सः अभिधावृत्तिमाश्रित्य वक्तुमुत्सहते स तदर्थं सततं व्यञ्जनामेव परिपूजयन् दृग्गोचरीभवति गिरिसुताया लज्जाशीलतामाभ्यन्तरिकं प्रेम तस्या आनन्दातिरेकगोपनप्रवृत्तिञ्च स न शब्दैः प्रकटीकरोति तद्दिशि सः सूक्ष्मं सङ्केतं विधातुं व्यञ्जनामाश्रयति। 'लीलाकमलपत्राणि गणयामास पार्वती' इत्येषा परिमितशब्दावलिरेव तदीया व्यञ्जनया पार्वतीगतांस्तान्, सर्वानुपरिनिर्दिष्टान् गुणान् विशदतया समुपस्थापयति।

"क्षतात् किल त्रायत इत्युदग्रः..." इत्यादिश्लोकस्थितैः कतिपयैरेव शब्दैः स "एकातपत्रं जगतः प्रभुत्वम्..."; "भूतानुकम्पा तव चेदियं गौः..." इत्यादिश्लोकद्वये यत्किमपि प्रोक्तं तत्सर्वमेव व्यञ्जनया प्रतिवदन् समवाप्तो भवति।

"वाच्यस्त्वया मद्वचनात् स राजा" इत्यादौ स 'राजा' 'श्रुतस्य', किञ्च 'कुलस्य' इत्यादीनि त्रिचतुराणि परमलघुलघुपदानि एव प्रयुङ्क्ते परं तैरेव पदैः सः "राज्ञः कर्त्तव्यं यत् स न्यायमाचरेत्; न स क्वापि पक्षपातं दर्शयेत्, अहमपि तव प्रजानां मध्येऽस्मि, मयि यो दोष आरोपितः स वस्तुतो युक्तोऽयुक्तो वेति त्वया निश्चेतव्यस्ततस्त्वया दण्डनीय आरोपितदोषो जनः। त्वं तु जगति ज्ञानिनां विदुषां मध्ये गीयसे, त्वदीयन्तु तु तत्कुलं यस्मिन् सगरभगीरथदिलीपदशरथ-सदृशा विश्वविदितन्याया नृपालाः समभवन्, एवं स्थिते कस्मात् त्वयाऽहं त्यज्ये किं त्वदीयैषा जनविशेषरञ्जनप्रवृत्तिर्विज्ञवर्गादृतास्ति-इत्यादिक-प्रचुरप्रचुरतर-भावान् व्यञ्जनयाभिव्यक्तीकुर्वन् उपलभ्यते। वस्तुत इह द्वित्रोदाहरणानामुपस्थापनं व्यर्थमेव। कवेस्तु काव्यानि सकलान्येव प्रारम्भादन्तपर्यन्तं व्यञ्जनाप्रधानायां भाषायामेव गीतानि सन्ति।

कालिदासः शृङ्गारी कविः कविष्वस्ति। स प्रेमपर्युपासको महान् भावुक-हृदयवान् सौन्दर्यसेविषु शिरोमणिः कविरिति सर्वमपि जगज्जानाति। तस्य

दृष्टिः सौन्दर्यस्य कोमलां भावनां सम्यगभिजानात्येव न, तत्प्रकटीकरणेऽपि सा परमप्रवीणा। सौन्दर्यवर्णनेषु तदीयेषु तस्य सरसं मनः सञ्चरमाणं केन न प्रेक्ष्यते ? संसारे यत् सौन्दर्यं बाह्यप्रकृत्यां रमते तदेवाभ्यन्तरिक्यामपि प्रकृत्यां क्रीडति। न बाह्यं सौन्दर्यमाभ्यन्तरसौन्दर्याद् भिन्नम्। स्थान-भिन्नतावश्यं परं न परमार्थतस्तत्र द्वैतता—इत्येतज्ज्ञापनार्थं कविना कालिदासेन स्वकीया लेखनी काव्यरचनायां प्रवर्तिता—

"पुष्पं प्रवालोपहितं यदि स्याद् मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद् विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य॥"
"आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्।
पर्याप्तपुष्पस्तवकावनम्रा सञ्चारिणी पल्लविनी लतेव॥"

इत्यादिश्लोकैः कवेः सौन्दर्यभावनायाः परिचयः सरलतयैव जायते।

'मितं च सारं च वचो हि वाग्मिता' इत्येष गुणः कालिदासे विशेषतया विराजते। माघ-भवभूतिप्रभृतिकवयः एतं गुणं निदधाना अपि उपेक्षन्ते तम्। ते तु वचन-विस्तार एव प्रसीदन्ति। पुरसुन्दरीणां वर्णनं कविकालिदासेन कृतं माघेनापि कृतं परं द्वयोरपि वर्णने महान् भेदोऽवगम्यते। कालिदासस्य वर्णने व्यञ्जनायाः श्रीः समवलोक्यते परं माघस्य वर्णने न। माघस्य वर्णनं विलासमयं सदपि कालिदासस्य विलासविरहितमपि वर्णनं न जेतुं पारयति—

"जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम्।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः॥" (रघौ)
"वलयार्पितमहोपलप्रभाबहुलीकृतप्रतनुरोमराजिना।
हरिवीक्षणाक्षणिकचक्षुषान्यया करपल्लवेन गलदम्बरं दधे॥" (माघे)

कालिदासस्य गद्यं सरलं समासाधिक्यरहितं स्वाभाविकमाभाणकश्रियं परिदधद् दृश्यते परं भवभूतेर्गद्ये एषा विशिष्टता न विद्यते, तत् कठिनं समासबहुलमस्वाभाविकञ्च भवति। दृश्यतां कालिदासगद्यम्—

"अयि आत्मगुणावमानिनि, क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति।" (शाकु०)

सम्प्रति भवभूतेर्गद्यमीक्ष्यताम्—

"अहो दलन्नवनीलोत्पलश्यामलस्निग्धमसृणमांसलेन देहसौभाग्येन विस्मय-

स्तिमिततातदृश्यमानसौम्यसुन्दरश्रीरनादरखण्डितशङ्करशरासनः शिखण्डमुग्धमुखमण्डल आर्यपुत्र आलिखितः।" (उत्तरे)

कालिदासस्य संवादेषु यत् सौष्ठवं यत् पाटवं यद् आर्जवं शोभते न तदन्यत्र प्राप्यते। अत्र कविद्वयस्य संवादाः निर्धीयन्ते तान् अधीत्य क्व अतितरां मनोऽभिरामं सौन्दर्यमिति सुधीभिर्निर्णयनीयम्—

सिंहः—अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद् बिभेषि।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः॥

राजा—कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम्।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयाऽस्याम्॥ (रघौ)

चैद्यदूतः—विकचोत्पलचारुलोचनस्तव चैद्येन घटामुपेयुषः।
यदुपुङ्गवबन्धुसौहृदात् त्वयि पाता ससुरो न वासवः॥

सात्यकिः—परितप्यत एव नोत्तमः परितप्तोऽप्यपरः सुसंवृतिः।
परवृद्धिभिराहितव्यथः स्फुटनिर्भिन्नदुराशयोऽधमः॥ (माघे)

कालिदासस्य संवादेषु रङ्गमञ्चोपयुक्ततातिरेकेण दृष्टा भवति। तत्र केवलमेव विशिष्टता न परं तत्र कथावस्त्वपि गतिशीलं विलोक्यते। भासकवेरपि नाटकीयसंवादादादिकं चेत् तुलनात्मिकया दृष्ट्या दृश्यते तदा सोऽपि न कालिदासीयसंवादात् सुन्दरतरः सिद्ध्यति। यतो हि भासस्य शब्दयोजनायां न तादृशी सुघटितता, सुमधुरता नादमयता च प्राप्यते यादृशी कालिदासस्य संवादादिषु।

कालिदासस्य कविता सर्वत्र प्रसादगुणगुम्फिता वैदर्भीरीतिललिता च प्राप्यते, वीक्ष्यताम्—

"किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत संत्यजामि।
इत्येकपक्षाश्रयविक्लवत्वादासीत् स दोलाचलचित्तवृत्तिः॥ (रघौ)

निश्चित्य चानन्यनिवृत्तिवाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत्।
अपि स्वदेहात् किमुतेन्द्रियार्थाद् यशोधनानां हि यशो गरीयः॥ (रघौ)

अलं विवादेन यथाश्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः।
ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते॥ (कुमारे)

दृश्यकाव्येष्वपि तदीयायां कवितायामेष एव गुण एवैव रीतिः संलक्ष्यते—

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः।

निमित्तनैमित्तिकयोरयं क्रम-

स्तव प्रसादस्य पुरस्तु सम्पदः ॥ ( शाकुन्तले )

उन्मत्तानां श्रवणसुभगैः कूजितं कोकिलानां

सानुक्रोशं मनसिजरुचः सह्यतां पृच्छतेव ।

अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे

सान्द्रः स्पर्शः करतल इव व्यापृतो मारुतो मे ॥ (मालविकाग्निमित्रे)

कालिदासो रससिद्धः कविः । यमपि रसं प्रति सः स्वदृष्टिं क्षिपति तं विलक्षणेनैव प्रकारेण अभिव्यनक्ति । शृङ्गारः करुणस्तु तस्य कवितायां कामपि अद्भुतामेव विच्छित्तिं बिभ्राणः पर्यवलोक्यते ।

रामाज्ञया लक्ष्मणः सीतां गहने कानने त्यक्तुमागतोऽस्ति । सः सीतां यदा महीपते रामस्य शासनमुज्जगार तदा सीतायाः सञ्जाता या शोकाकुला दशा तां कविशब्देषु पश्यन्तु—

"ततोऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना ।

स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥

इक्ष्वाकुवंशप्रभवः कथं त्वां त्यजेदकस्मात् पतिरार्यवृत्तः ।

इति क्षितिः संशयितेव तस्यै ददौ प्रवेशं जननी न तावत् ॥"

शृङ्गारस्य संयोगपक्षो विप्रलम्भपक्षश्चोभौ कविना चारु चित्रितौ । संयोगशृङ्गारस्य मधुरतापाने चेन्मनसि कौतूहलं वर्धते तदा कुमारसम्भवस्याष्टमः सर्गो विलोकनीयः । संयोगशृङ्गारस्यालम्बनपक्ष उद्दीपनपक्षश्च द्वावपि यद्येकत्रैव द्रष्टव्यौ-स्तस्तदोक्तस्यैव काव्यस्य वसन्तवर्णनविषयकस्तृतीयः सर्गोऽनुशीलनीयः । विप्रलम्भशृङ्गारस्य चेत्सौन्दर्यं मनः स्पृहयति तदा मेघदूतकाव्यमेव तदर्थमलं स्यात् ।

एषा इह संयोगशृङ्गारश्रीः समीक्ष्यताम्—

सस्वजे प्रियमुरोनिपीडनं प्रार्थितं मुखमनेन नाहरत् ।

मेखलाप्रणयलोलतां गतं हस्तमस्य शिथिलं रुरोध सा ॥

अत्र च विप्रलम्भशृङ्गारोऽपि विलसन् विलोक्यताम्—

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं

सास्रेणाश्रु द्रुतमविरतोत्कण्ठमुत्कण्ठितेन ।

उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती

सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥

संसार-विषय-विमुखस्यापि कण्वस्य मनः शकुन्तलां स्वभर्तृगृहं गच्छन्तीं वीक्ष्य कियद् दूयते इति दृश्यताम्—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ॥

कालिदासस्योपमानां रसात्मकत्वाद्रसरमणीयत्वमतितरामेव च मर्म्मस्पर्शित्वमवलोक्यते । औचित्ये सन्दर्भे च शोभायाः समुत्पादनस्य कला तासु नितान्तमभिनन्दनीयास्ति । द्वित्राण्युपमालङ्कृतान्युदाहरणानि वीक्ष्यन्ताम्—

"तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥"

विधिविधानरूपशापाच्चक्रवाकी निशायां चक्रवाकाद् वियुक्ता भवति यक्षोऽपि स्वभर्तुर्वर्षभोग्याच्छापान्निजकान्तातः पृथक् अस्ति—अतस्तदीया कान्ता कान्तवियोगविधुरास्ति द्वयोरपि सन्तापस्य समानत्वात् कवेः 'चक्रवाकीमिव' इत्येषोपमा कियती समुचितसन्दर्भशोभासंवर्द्धिका च वर्तते । पद्मिन्युपमितत्वात् यक्षप्रेयस्याः, तस्याः सुकोमलत्वं कृशाङ्गत्वं सितत्वस्पर्शसुखत्वादिकञ्च कियन्मनोज्ञभावेन प्रेक्षकस्य पुरतः समुपस्थितं भूत्वा तन्मनो नन्दयन्तीहेत्यपि विलोकनीयं वर्तते ।

"अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥"

इह मन्त्रकृतामग्रणीर्वरतन्तुः उष्णरश्मिसदृश उक्तस्तेन तस्यामिततेजस्त्वं तत्प्राप्तज्ञानस्याज्ञानध्वान्तविनाशनामोघसफलत्वञ्च प्रकटीभवति । उपमायां विद्यमानोपयुक्तता समुचितता च नितरामेव मनः प्रीणाति ।

तं वीक्ष्य वेपथु मती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥

अत्रत्योपमा तत्सर्वमपि अतितरामेव समीचीनतया प्रकाशयन्ती लक्ष्यते यन्निखिलं विशालैका पद-पङ्क्तिरपि नैतावत्या ललिततयाविर्भावयितुं क्षमास्ति। मार्गाचलाकुलितसिन्धुना सह पार्वत्याः साम्यं कृत्वा कविः पाठकानामग्रे पार्वत्या मनसो मुग्धत्वमाश्चर्यवत्त्वं किंकर्त्तव्यताविचारणाक्षमत्वं शालीनत्वं लज्जाशीलत्वं स्थितेरलङ्घ्यत्वञ्च इत्यादिबहून् भावान् समुपस्थापयतीति सुधीभिर्विचार्य्यम्। 'उपमा कालिदासस्येति यदाभाणकं कालिदासं लक्ष्यीकृत्य श्रूयते तत् सर्वथैव सत्यम्।

अलङ्काराणां प्रयोगे कविः स्वीयां सूक्ष्ममर्म्मज्ञतां प्रकाशयति। स तानुपयुज्य प्रचुरतरपदविभाव्यं वक्तव्यं परिमिततरपदेष्वेव प्रकटीकर्तुं सदवसरं सरलतयैव हस्तं गतं करोति। तस्य कवितायां व्यर्थमेवालङ्काराणामुपयोगो न दृश्यते। अतः सा स्फुटचन्द्रतारका विभावरीव विभाति। तत्रानुप्रासच्छटा अप्रयासेनैव समागतास्ति। उत्प्रेक्षा-दृष्टान्तार्थान्तरन्यासादिका अलङ्काराः कवेः बहुश्रुतत्वं व्यापकदृष्टित्वञ्च ज्ञापयन्ति।

"कस्यचन पदार्थस्य सम्यग् विलोकनं कृत्वा तस्य स्वाभाविकतया यद् यथायथवर्णनं तदेव कलाया उत्कृष्टत्वं स्मृत"मिति यद् रस्किन आह तत्कालिदासस्य प्रकृतिवर्णने कृत्स्नतयान्वर्थीभवति। तदीये प्रकृतिवर्णने तस्य निरीक्षण-नूतनता, सहृदयताया उदात्तता, कल्पनायाः अभिनव उन्मेषो विद्योतन्ते। तत्-प्रकृतिश्रियस्तस्य प्रकृतिजनन्युत्सङ्गे शैशवादेव क्रीडनं वर्धनञ्च वेदयन्ति। तद्रचनायामतः प्रकृतिलक्ष्मीस्तथा विराजते यथा मणिमालायां स्वर्णसूत्रम्। ऋतुसंहारश्चेद् ऋतूनां सर्वेषां सुन्दरतां दर्शयति तदा मालविकाग्निमित्रं कमनीयकलेवरां मालविकां प्रकृतिदेव्याः प्रतिमूर्तित्वेन कल्पयित्वा सन्निवेशयति। कुमारसम्भवे यदि कविः प्रकृतिपुत्र्या जन्मस्थलीभूतं हिमालयमेवोपायनीकरोति तदा मेघदूतं स प्रकृत्यामेव जनयति। विक्रमोर्वश्यां प्रकृतिर्हेमकूट-राजोद्यानादिषु अप्सरसाञ्च रूपेषु यदि आत्मानं परिणमयन्ती वीक्ष्यते तदा रघुवंशे सा क्वचिद्-वशिष्ठाश्रमस्य॰रूपं परिधाय, क्वचिद् वरतन्तोर्विद्याविद्योत्यमानमाश्रमपदं भूत्वा क्वचिच्च त्रिवेणी भूत्वा समुपस्थिता भवति। अभिज्ञानशाकुन्तले तु दर्शकाः प्रकृत्यां शकुन्तलां प्रेक्षन्ते शकुन्तलायाञ्च प्रकृतिम्। आयान्तु तावदत्रानुभूयतां शालनिर्यासगन्धी पुष्परेणूत्किर आधूतवननिकरः सुखस्पर्शः समीरः, श्रूयन्तां तावत् शिखण्डिनां षड्जसंवादिन्यः केकाः, विलोक्यन्तां तावन्मनोहरेक्षणानि मृग-

द्वन्द्वानि; वीक्ष्यन्तां तावद् उन्नमिताननानां कलनिर्ह्रादानां सारसानां पङ्क्तयः; घ्राणविषयीक्रियतां सानन्दं सरसीवीचिविक्षोभशीतलोऽरविन्दामोदः। वस्तुतः कालिदासः प्रकृतेरन्तःस्थलस्य सूक्ष्मद्रष्टास्ति।

कवेः कालिदासस्य प्रतिभाचातुरी चरित्र-चित्रणेऽपि सर्वथैव कुशला। अतः कविर्यस्यापि चरित्रं चित्रयति सः सजीवो भूत्वा हृदयावर्जको भूत्वा समक्षे समुपस्थितो जायते। तस्य पात्रे पात्रे जीवन-शक्तिराचरणचूडं चकास्ति। व्यक्तित्वं प्रतिपात्रस्य सशरीरं भूत्वा नेत्रयोः पुरतोऽवतरति। उमा-सीता-शकुन्तलोर्वशी-मालविकादिकानि स्त्रीपात्राणि तदीयानि को विस्मर्तुं शक्नोति? दिलीप-रघु-राम-दुष्यन्त-पुरूरवःप्रभृतिपुरुषपात्राणि प्रेक्ष्य को न मानवः प्रेरणाविशेष मश्नुते? किं सिंहाय स्वदेहमुपानयन् महाराजो दिलीपः कदापि कस्यचनापि जनस्य हृदयात् स्रस्तो भवितुमर्हति? किं कदापि—

"बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः॥"

इत्येतस्मिन् श्लोके दृश्यमानो रामः सकलामपि मानवजातिं स्वदिशि आवर्जयन् न रोदयति? अपि किं दुष्यन्तस्य—

"येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम्॥"

इत्येषा गिरा मानसाश्वासनदायिनी जगतीतलस्थप्रजाजनस्य युगयुगान्तरं यावत् श्रोत्रेन्द्रियं न प्रीणयिष्यति?

कालिदासस्य काव्यानां सौन्दर्यमिदमपि विद्यते यत् तत्रानेकशास्त्राणां ज्ञान-गरिमापि स्वकीयया दिव्यया तेजःप्रभया मानवानां मनांसि नितरां रञ्जयन् उज्जृम्भते। कालिदासस्य तत्तद्दर्शनशास्त्रादिसिद्धान्ताः काव्याकारा एव भूत्वा समुपस्थिता भवन्ति। न च तेषां सत्ता तदीयेषु काव्येषु स्वकीयां वैभवश्रियं पृथगेव विधाय स्थातुं प्रभवति—इत्येतदस्ति च कवेः कालिदासस्यान्यदपि विलक्षणं वैदग्ध्यम्। दृश्यताम्—

"पणबन्धमुखान् गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम्।
रघुरप्यजयद् गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः॥"
"न नवः प्रभुराफलोदयात् स्थिरकर्मा विरराम कर्मणः।
न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात्॥"

इत्यादिना योगदर्शनस्य सौन्दर्यं कियत्या मनोज्ञया रीत्या,

"अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव॥"

इत्यादिनोपनिषत्प्रतिपाद्यं ब्रह्म कीदृशेन वचनपाटवेन,

"बहुधाऽप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे॥"

इत्यादिना अद्वैतवादस्य निखिलतेजस्तिरस्कारिणीं तेजश्छटां कीदृशेन ललितेन सङ्केतेन,

"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः॥"

इत्यादौ "अजामेकां लोहितशुक्लकृष्णाम्" इत्येतां श्रुतिं कियत्सौष्ठवेन कविः प्रतिपादयन् दृग्गोचरीभवति।

कालिदासः परमोदारमनाः परमप्रशंसनीयप्रतिभाप्रकाशपेशलो महाकविरासीत्। साम्प्रदायिकताभ्यः सः सर्वथैव दूरे समतिष्ठत। सः सर्वमपि विश्वं स्वदेशं मेने। स स्वधर्मं तदेवामंस्त यः श्रुतिस्मृतिमतो वर्तते। तस्य महामानवतां प्रकटयतः श्लोकाविमौ—

"एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम्।
विष्णोर्हरस्तस्य हरिः कदाचिद् वेधास्तयोस्तावपि धातुराद्यौ।" (कुमारे)

"रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः॥" (रघौ)

धन्या सा गिरा यस्यामेष कविः स्वकाव्यानि ससर्ज, धन्येयञ्च धरा यत्र स जज्ञे।

—❦—

( २६ )

## शकुन्तला

"उढेस्ट दाउ दी यङ्ग ड्रीअर्स ब्लॉसम्स एण्ड दी फ्रूट्स ऑफ इट्स डिक्लाइन, एण्ड ऑलवाइ ह्विच दी सोल इस चार्म्ड, इन् रेप्चर्ड फीस्टेड, फेड, उडेस्ट दाउ दी अर्थ एण्ड हेविन इटसेल्फ इनवन सोलनेम कम्वाइन ? आइ नेम दी, ओ शकुन्तला, एण्ड ऑल एटवंस इज सैड ।"

इत्येतस्यां हि चतुष्पद्यां यूरोपीयेन कविवरेण्य 'गोथे' महानुभावेन शकुन्तला-मुद्दिश्य स्वीया दृष्टिः स्फुटतया प्रकटीकृतास्ति नो तदीयेयं चतुष्पदी केवल-चतुष्पदी । वस्तुतः सा प्रकाशस्तम्भ इव प्रतीयते । समग्रमपि नाटकं तदीयेन ज्योतिषा सर्वथा प्रकाशमानं भवति किञ्च नाटकीयाभ्यन्तरिकी प्रकृतिः प्रयात्यु-न्मीलनं कृत्स्नतया । गोथे विश्वसिति यत् शकुन्तला तारुण्यकुसुमाकरस्य सुमनःसौरभं प्रौढताया शुचितायाश्च परिपक्वं मधुरं फलमेव प्रत्यक्षं भुवि विभाति । सा स्वर्लोकं भूलोकं च एकीभूतमेव विदधती समुल्लसति नूनम् ।

गोथे कवेरिमामुद्भावनां भावुकतामेव तदीयां मत्वा वयमुपेक्षितुं प्रभवा-मोऽथ चेदमपि वयं विचारयितुमर्हामो यत् सः अभिज्ञानशाकुन्तलमुत्तम-कवितात्वेनाद्रियते परमेतन्न तथ्यम् । तस्य श्लोक एष आनन्दावेगवशात् प्रादु-र्भूतात्युक्तिरेव न । अपि तु अस्ति सः सदसद्-व्यक्तिकर्तुर्मनीषिण आलोचकस्य गम्भीरविमर्षणानन्तरप्रकटीकृतो निर्णयोऽभिनवः । विद्वान् आलोचकः स्वकीयैः शब्दैर्निर्देशविशेषम्प्रति कुरुतेऽत्रेङ्गितम् । गोथे स्पष्टरूपेणाभिदधाति यद् अभिज्ञानशाकुन्तलं तत् तत्त्वं वर्तते यत्र विकासस्येतिवृत्तं सन्निहितमस्ति, तत्फले परिणमद् विकस्वरं सुमनमस्ति, तद् दिवि विपरिवर्तमाना वसुधास्ति, अस्ति च तत् तत् पार्थिवत्वं यत्रात्मज्योतिः परिस्पन्दते ।

असंशयं हि शाकुन्तले संयोगानां समवायः शोभते । नाटकस्य प्रमुखं लक्ष्यं भौतिकताया आध्यात्मिकतायां सन्निवेशनं वर्तते । प्रथमस्याङ्कस्य मध्ये चेद् आदिमा योगा अस्थायिनो रागात्मका मनोभावविभाविता भौतिकाः सन्ति तदान्त्यस्याङ्कस्यान्तरालेऽन्तिमा योगा आध्यात्मिकाः सन्ति, ते आनन्दामृत-वर्षिणो विरक्तानामुटजान् संश्रित्य समुपतिष्ठन्तेऽस्मद्दृष्टिसम्मुखे । नेदं रूपकं

कस्यचन विशेषस्य भावविशेषं कमपि, आहोस्विद् नोद्गमन्तं कमपि चरित्र-विशेषमेवाभिव्याप्य प्रणीतमपि तु पार्थिवसौन्दर्यधरातः प्रेमोत्थाप्य नैतिक-सौन्दर्यस्याविनाशिनीं धरामध्यासयितुं तत् ( प्रेम ), सृष्टम् ।

कालिदासः परमसुखपूर्वकं भुवं स्वर्गीयेणैश्वर्येण मण्डयति । तस्य मेदिनी इयत्या नैसर्गिकतया नाकेऽन्तर्भवति यन्न वयं "तयोः सन्धिस्थलमेतदि"त्येतद्-बोधनाय सीमारेखामपि विधातुमीशिमहे । प्रथमेऽङ्के कविः शकुन्तलाया यौवन-सुलभदुर्बलतायाः पतनं नैव निगूहति, सः स्पष्टमेव तावत् पतनं नायकस्य नायिकायाश्च चरित्रे समानभावेन दर्शयितुमुपसरति यावद्धि तादृशे तावति च वयसि सम्भवम् । सः तारुण्यस्योद्दामवेगवत्या गत्याश्चञ्चलतामुन्मत्ततां चाटु-भाषणशीलताञ्च सम्यगेव सर्वाङ्गीणतयाऽऽलिखन् संलक्षयते । गम्भीरत्रपायाः सुदृढात्मप्रकथनस्य च मध्ये स जायमानं संघर्षञ्च समीचीनतयोन्मीलयितुं क्षमोऽवाप्यते । शकुन्तलायाः सारल्यस्य दीप्यमानं प्रमाणमिदं यत् सा दुष्यन्ते समागते न पूर्वं स्वकीयान् भावावेगान् संयमोपेक्षणोन्मुखान् कर्तुं कदापि उत्सहते; सा नैव जानाति यत् कथं सारमानं वशीकुर्वीत कथञ्च सा स्वान् भावान् निगूहेत् । सा कामे सर्वथानभिज्ञासीत् न सा स्वान्तं गोपायितुं कवचमेव धारयति स्म न चापि सा प्रेम्णो बलीयस्यां रागात्मकतायां संशेते स्म नाथवा चरित्र एव स्वस्नेहिनो दुष्यन्तस्य शङ्कते स्म। तपस्विनो दुहिता स्वशरीररक्षकाद् दूरे आसीत् तथैव, यथा मृगो हि वन्यो भयाद् दूरेऽवतिष्ठते ।

दुष्यन्तः शकुन्तलां नितान्तमेव स्वाभाविकभावेन जेतुमवसरमविन्दत् । यथा कविस्तस्याश्चरित्रस्य गम्भीरतरां पावनताम् आलिखितुं न मनागपि काठिन्यं लभते स्म तथैव स न अन्यूनीभावं गमितां स्वाभाविकीं परिपूततामधिकुर्वन्त्या-स्तस्याः पतनमपि प्रदर्शयितुमीषदपि क्लिष्टतामनुबभूव । इदमस्ति तदीयाया ऋजुताया द्वितीयं प्रमाणम् ।

वन्यं पुष्पं स्वस्योपरि निपतितं रजः परिमार्ष्टुं न भृत्यमपेक्षते । अस्ति शकुन्तला अनावृता; रजस्तदुपरि क्षिप्तं भवति; परं तथात्वेऽपि स्वीयां मनोज्ञां शुचितां सा अनायासेनैव शासितुमीष्टे । रजो यद्यपि शकुन्तलोपरि क्षिप्तं बभूव परं न सा तत्र अब्वेतत् । वन्यः सरलस्वभावः कुरङ्ग इव गिरिनिर्झर-स्रोत इव सा तद्विधा सत्यपि निर्मलैव अदृश्यत ।

कालिदासः स्वां तपस्वि-पालितां नववयस्कां नायिकां शकुन्तलां प्रकृतेरशङ्कनीयपथोपरि विचरितुं सर्वथैव स्वच्छन्दतयोन्मोचयन् समवाप्यते। न सः कुत्रापि कदापि च निरुणद्धि तां विचरणात्। तादृशेन प्रकारेण प्रदर्शयन् अपि कविस्तां संयमबन्धुरं शोकसहनशीलमाध्यात्मिककठोरानुशासननिष्ठजीवनं वहन्त्यामादर्शपत्न्यां पर्यवस्यन् प्रेक्ष्यमाणः सञ्जायते। प्रारम्भे आत्मनात्मनि एव विस्मृता प्रकृतिप्रकर्षादेशचरं विटपव्रततिजगदिव प्रतिभाति सा परमन्ते नितान्तगम्भीरमात्मानं विदधती नारीव शोकनिलीना, प्रगाढसहिष्णुत्वसंयमोपवासादितपःपरायणा धर्मात्मनामीश्वरानुरागपराणामाचरणमाचरन्ती स्वशरीरं व्रतादिभिः कठोरैस्तनुतां नयन्ती लोचनगोचरीभवति। महासागरस्य सरितश्च; प्रकृतेः निसर्गभावस्य च शम-व्यापारयोः सम्मेलनास्पदतां नीत्वा कालिदासः स्वकीयां नायिकामनुपमया कलाकुशलतया कल्पितवानित्यत्र न स्तोकोपि संशयः। तस्याः पितासीत् महर्षिर्माता च तस्या आसीदप्सरा। तस्या जनुर्विघ्नाहततपसः समजायत परं तस्यां भरणं पोषणं च तस्मिन् हि आश्रमोटजे बभूव यत्र प्रकृतिदेव्या आत्मसंयमस्य च, सुन्दरतायाः स्वनिरोधस्य च वसतिः सुहृद्भावपूर्वकं दृग्गतीभवति। असत्यपि तत्र कस्मिंश्चिदपि सामाजिके रूढिगते बन्धने नियतं सा भूमिर्धर्मसम्बन्धिभिः परुषैर्नियमोपनियमैः परिगृह्यमाणावलोक्यते। शकुन्तलाया गान्धर्वोद्वाहोऽपि वीक्ष्यते तदनुगुणामेव मुद्रां बिभ्राणः। अत एव तत्र प्रकृते रूक्षता प्राप्यते परं सोपयमस्य समाजाभिमतं ग्रन्थिजुषते। नूनं नाटकमुपमानविहीनं भवत् समग्रेऽपि साहित्ये संशोभते, तत्र स्वतन्त्रतया सहात्मनियन्त्रणस्य विद्यमानत्वात्। उभयोरप्येतयोः सबलयोस्तत्त्वयोः सम्परायात् तदीयाः प्रसन्नताः अप्रसन्नताः सर्वाः, संयोगा वियोगाश्च सकलाः उपसृता भवन्ति।

शकुन्तलायाः सरलतायां नैसर्गिकता विभाति। न वस्तुतस्तु सा स्वाभाविकी सरलता मिरन्दायामुल्लसति। तयोर्द्वयोरपि विभिन्नायां परिस्थित्यां परिपोषणत्वं तद् भिन्नतायाः कारणं प्रतीयते। शकुन्तलायाः सरलतायां बाह्यतत्त्वस्य अणीयानपि भागो न वर्ततेऽतएव मिरन्दायाः सरलता न तस्याः सरलतां संवदति। अस्माभिरनुपदं दृश्यते यत् शकुन्तलायाः सख्यौ तस्यास्तत्क्षणिकः प्रथमकलिकात्वं प्रतिपादयन्त्यावुपस्थिते भवतः। सा लौकिकतायाः कस्मिंश्चिदप्यंशे परिचिता नासीदित्येतन्न वक्तुं शक्यं यतो हि यत्र तपोवने सा वसतिं चक्रे न तदेकान्ततः

समाजादात्मानं पृथग् विधाय सन्तिष्ठते स्म। तत्रापि गार्हस्थ्यधर्मः परिपाल्यते स्म। सा स्वभावविनीता शकुन्तला वाह्यजगत्यभिज्ञतां दधानापि नासीत् तदनुभवशालिनी। विश्वस्ततया तन्मानसोपरि स्वकीयोऽधिकारः कृत्स्नतया कृत आसीत्। वस्तुतस्तस्याः पतने कारणमियं विश्वस्ततैवास्ति। किन्त्विदमपि सत्यं यद् इमे द्वे गुणास्तां पातयाम्बभूवुस्त एव तस्याः परमसफलतापूर्वकमुद्धारमपि कर्तुं समर्था अजायन्त। यद्यपि शकुन्तलाया आस्था परुषतमेन प्रहारेण भग्नतां नीताऽभवत् परन्तेषा तदीया विश्वस्ततैवास्ति या तस्यामविचलां धीरतां द्रढीयसीं सहिष्णुतां प्रणयपेशलां सरसतां सञ्चारयतिस्म। सिरन्ध्र्याः सरलता न जातु एतस्या भीषणाया अग्निपरीक्षायाः शरण्यतामियाय। न सा लोककटुताया अनुभूतिमपि समवाप्तुमवसरं कदापि आसादयतिस्म।

अस्मदीया विद्रोहिणो भावाः प्रचण्डप्रभञ्जनोत्थापनकारिणो भवन्ति। कालिदासेनास्मिन् नाटकेऽनुशयतापतप्ताश्रुधाराभिर्विद्रोहिभावभीषणानलज्वालाः निर्वापयितुं कृतोऽस्ति प्रयासः। परं न स चिरं तद्व्याधेः सत्तां द्रष्टुमभिलषते। तस्य वैद्युदाभाधारिणो लीलां क्षणं सन्दर्श्य स तिरोधातुं तं, सत्वरं पटक्षेपमपि विदधाति। चेद् दुर्वाससः शापाद् बहुपत्नीवद्दुष्यन्तकृतपरित्यागः क्वापि दैवीघटनेव नाघटिष्यत तदा स परित्यागः परमनृशंसोऽसहनीयशोकजनक एव सिद्धोऽभविष्यत्। तथाविधे सति तु परित्यागे, न नाटके शान्तिर्जीवितुं प्रभवेत् न च तत्र समानाधिकरणाच्छटैव स्थातुमर्हेत्। अवतारितायां जवनिकायां कविना या दारणा कृतास्ति वस्तुतस्तद्धेतो राजकृतमागो नास्मद्धीपटले उद्वेगं जनयितुं शक्नोति न चाशान्तिमेव स्रष्टुं प्रभवति। पञ्चमोऽङ्कः सर्वमप्येतत् प्रस्तवीति। शकुन्तला आगच्छति; राजा शापान्न तामभिज्ञातुं क्षमते। स तां कटुशब्दैरवजानाति। शकुन्तलाया हृदयं दूयते ताम्यति च। सा नृपकृतं तं तं प्रणयभावं स्मारयति च। कविरेतद्विषयकं यद् दृश्यमवतारयामास तत्र तस्य कवित्वकलायाः परमपाटवं दृष्टं जायते। एतद्विधदृश्यावतारणात् प्राक् कविना हंसपदिकागीता गीतिर्या श्राविता वस्तुतस्तामाहतहृदयाश्रुसम्पृक्तां गीतिमाकर्ण्य श्रोतुर्मानसं नितान्तमाघातं संलभते :

अहिणवमहुलोलुवो भवं
तह परिचुम्बिअ चूअमंजरिं
कमलवसइ मेत्तणिव्वुदो
महुअर ! विम्हरिओ सिणं कहं ?

गते चतुर्थेऽङ्के यदा शकुन्तला पितुः कण्वस्य शुभाशिषस्तपोवनस्य च सकलस्य शुभाः कामनाः आदाय समुदं स्वभर्तुः सदनं प्रतिष्ठते तदास्मदीयं यन्मानसं तास्ताः प्रियप्रियतराः आशाः निबध्नाति तस्यैवोपरिभवत्यशनिपातः।

यदा विदूषक आह 'किं दाव गीदीए अवगओ अक्खरत्थो ?' तदा राजा सस्मितं प्रावोचत्—"सकृत्कृतप्रणयोऽयं जनः। तस्या देवी वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि।" नृपतेः प्रणयगतायाः एतस्याश्चञ्चलताया स्वरूपमेतन्न वस्तुतोऽस्त्यर्थरहितं पञ्चमस्याङ्कस्य प्रारम्भे कविः आचार्यत्वं प्रपन्नेन पाटवेन प्रदर्शयति यद् दुर्वाससः शापः मानवीयप्रकृतौ किं कीदृशं च बीजं वपति हन्त।

चतुर्थमङ्कं पश्यन्तो यदा वयं पञ्चममङ्कं प्रपद्यामहे तदा वयमकस्मान्नवीन एव वातावरणे प्रविशामः। साधु-महात्मनामादर्शसंसाराद् वयं राज्ञः प्रासादमुपसरामो यत्र दयाविहीनानि हृदयानि कुटिलकुटिलतराश्च प्रेमपथाः सर्वत्र सम्प्रेक्ष्यन्ते। सुवर्णस्वप्नो हि य आश्रमपदे विलोकितोऽभूत् स इह भग्नो भवितुमारभते। शकुन्तलया सार्धमागतौ द्वावपि शिष्यौ तत्क्षणमनुभवतो यत्तौ हि अपरमेव किमपि जगत् समवाप्तौ स्तः। सा हि जगती सर्वतः अग्निना ग्रस्यमानास्तीति तावनुबभूवतुः। पञ्चमस्याङ्कस्यादावेतद्विधैः स्पर्शैः संस्पृश्य कविर्दुष्यन्तकृतशकुन्तलापरित्याग-सहनार्थं नः सज्जयति।

भर्तृकृतस्त्यागः शकुन्तलामाक्रमते। ततश्च शकुन्तला वज्रप्रहतेव सञ्जायते। सा विश्वस्तहस्तप्रताडिता मृगीव तदा प्रतिलक्ष्यते। सा वनकुमारी आशाशून्याश्चर्यपरिविद्धेव साध्वसग्रस्तेव हृन्मर्मविदारणकारिण्या व्यथया व्यथितेव तदा प्रतिभाति। एकेनैव क्रूरदृष्टाघातेन सा तस्मादाश्रमात् समूलं विच्छिद्यते यत्र सा चिरमुवास। ज्ञायते तदीयः सम्बन्धस्तस्याः स्वकीयेनाश्रमेण सार्धं न मनागपि शाब्दिकः आसीत् न चैव लाक्षणिकः। युगपदेव तस्याः प्रियाणि मित्राणि पक्षिणो मृगाः, मृग्यः, वृक्षाः, लताः—तत आकृष्यन्ते। तस्याः पूर्ववर्तिनो जीवनस्य सुन्दरता शान्तिः शुचिता चैकदैव तां विमुच्य दूरे पलायन्ते। सा जायतेऽशरणा एकाकिनी च। एकेनैव क्षणेन प्रथमचतुरङ्कगामि गीतं भवति उपसंहृतम्।

गम्भीरतरा निस्तब्धता एकाकिता च हन्त, तामाश्लिष्य विजृम्भमाणावलोकिता भवति। सा, यस्या मृदुला हृत्तन्त्री आश्रमस्य निखिलमपि संसारं नैजे बन्धुत्वे पर्यवर्तयत्, सम्प्रति सर्वथैव एकाकिनी सन्तिष्ठते। सा

स्वकीयैः सान्द्रशोकैरिमां विशालां रिक्ततां पिपर्ति। कण्वस्याश्रमम्प्रति शकुन्तलाया निवर्तनं न कालिदासस्तदानीमुचितं मन्यते। दुष्यन्तेन कृते परित्यागे, न तस्यास्तदाश्रमे शान्त्या स्वस्थतया च सहवासः कदापि सम्भवः। अधुना तु तदीया प्राक्तनी स्थितिः परिवृत्तिमुपेतास्ति; तस्याः सम्बन्धस्तस्मात् संसाराद् सम्प्रति किञ्चिद्दूरे नीतो वर्तते। यदि भूयस्तस्याः स्थितिस्तस्मिन्नेव पुराणे वातावरणे कृताभविष्यत् तदा समुपस्थितामवस्थां प्रति कटुविरोधस्यैव प्रदर्शनमघटिष्यत। इदानीं तस्या व्यथितायास्तस्य गरीयसः शोकस्य कृते युक्ततरं योग्यतरञ्च नीरवत्वमपेक्षितमासीत्। न कविर्नवे स्थाने तानि पुरातनानि मित्राणि तदीयानि दर्शयति न च तान्याश्वासनान्येव सन्निदधाति यानि तद्विधविश्लेषजनिततापापनयनाय अपेक्षितानि भवन्ति। कवेर्मौनं हि तद्-दिग्विषयकं केवलमस्मदीयायास्तां शरणरहिततां निस्तब्धतासम्बन्धिनीं चेतनाञ्च गुर्वीं विदधाति या खलु शकुन्तलां परिवेष्टय संस्थितास्ति। नात्र संशीतिश्चेत् पतित्यक्ता पत्नी कण्वस्याश्रमम्प्रति प्रापिताभविष्यत् तदा नूनं महर्षेराश्रमपदं दिग्व्यापिना क्रन्दनध्वनिना परिपूर्यमाणमवर्त्स्यत। शकुन्तलायां तत्र प्राप्तायां नियतं पादपानां वल्लरीणां च तदीययोरुभयोः सख्योरपि अविरतविलापस्य प्रस्फुटनं सम्भवमासीत् तस्मादेव कारणात् कविर्न तां तत्र निनायेत्यस्माभिरुह्यते। परं मारीचाश्रमस्य पर्णशालायामपरिचितायां तु सर्वथैवानुद्वेगोऽनिर्वेदश्च अस्माभिः प्राप्यते। केवलमस्मन्नयनयोः पुरतः परित्यक्तायाः शकुन्तलायाः सा मूर्तिः समुपस्थिता जायते या निःसीमं शोकं वहन्ती ध्यानस्थस्तपस्वीव तपस्यायां निरतास्ति।

सम्प्रति दुष्यन्तः प्रगाढानुशयेनातिक्षीणतां गतोऽस्ति। एषः अनुतापस्तप एव। यावच्छकुन्तला नैतेनानुशय-तपःसाधनेन विजिता भवति तावत् तज्जयनं न कामपि महत्तां दधाति। यौवनोद्धततरङ्गस्याकस्मादुत्थितस्य वेगः शकुन्तलां नृपाय प्रददौ परं न वस्तुतस्तत् तस्य शकुन्तलोपरि जय इति वक्तुं शक्यते। तस्या अधिगमनं तु यथार्थं समर्पणेन, तपसा वा भवितुं शक्यम्। यत् प्रयासमन्तरेण लभ्यते तद् हस्तात् स्रस्तमपि भवति लघुतयैव। तस्मादेव कारणात् कविर्द्वावपि प्रणयिनौ तपश्चर्याग्निना चिरं तापयति येनोभावपि तौ तथान्योन्यं प्रतिगृह्णीयातां यथा भवेतामजरसम्बन्धसम्बद्धौ। यदि शकुन्तलायाः परिग्रहस्तदैव भूपतिना कृतो भवेत् यदा सा प्रथममेव तद्राजभवनम्प्रति नीताभवत्

तर्हि नियतं तस्यां स्थित्यां तया हंसपदिकानामेव सख्या संवर्ध्येत। सापि शोकाकुलमुपेक्षितमर्थविरहितं जीवनं नयन्ती नूनं दृष्टा स्यात्।

शकुन्तलार्थं तु तद्विधोऽपि प्रपञ्चः शुभाशंसैव असिद्धयत यद् दुष्यन्तस्तां कठोरदार्ढ्येन प्रत्याचख्यौ। यदा तस्याः कठोरतायाः क्रूरायाः कुफलं तमेव प्राहरत् तदा न स तस्यामात्मानं विरागं कर्तुमशक्नत्। अदमनीयस्तस्य बलवत्तरः शोकस्तन्मानसमदीद्रवत् शकुन्तलां च स तथा संचस्कार यत् सापि तत्रैव ममौ। अतः प्राक् न कदापि स भूपस्तादृशमनुभवमवाप्तुमवसरमासादयति स्म। नातः पूर्वं सः कदापि याथातथ्येन प्रेम्णस्तादृशं रूपं धर्मञ्च द्रष्टुमनेहसमेव लब्धवान्। वस्तुतस्तु एवंविधानुभूत्युपभोगार्थं सम्राजः सौभाग्यमेव न निदधति। तेषामाकाङ्क्षाः आयासमसन्तरेणैव तोषं तृप्तिं चाश्नुवन्ति तस्मात् ते तच्च कदापि समवाप्तुं शक्नुवन्ति यत् केवलं तपसा त्यागेन च सुलब्धं भवति। नियतिर्दुष्यन्तं तदानीं गभीरतरे परितापे प्राक्षिपत्। तेन स पारमार्थिकप्रेम्णः पात्रमभवत्। शकुन्तलाप्रत्यादेशस्तमामूलमार्जयत्।

इत्थं कालिदासः कलुषितस्य मानसस्य दोषं हि सर्वं साकल्येनाभ्यन्तरानलेन प्रदहन् संलक्षितो जायते। स तथा न चक्रे येन बाह्यदृष्टिर्न तत्सर्वं द्रष्टुमर्हेत्। यदान्तिमेऽङ्के अवस्तारः पतति वयं सर्वाण्यपि दुरितानि विध्वस्ततां गमितानि पश्यामः; अस्मत्पुरतः परिपूर्णपरितोषामितानन्दजनिता हि शान्तिः सर्वत्र सस्मितं विलसन्ती परिस्फुरति। शकुन्तलादुष्यन्तयोर्यदा परस्परं मेलनं घटते तदा तयोस्तस्यां सन्निधौ नैतिकता सर्वाङ्गीणभावेनावदाततां शुभ्रतां पुनीततां च गमिता दृष्टिपथेऽवतरति। वस्तुतो गोथे सत्यमाह—'शकुन्तला कम्बाइन्स दी ब्लॉसम्स दी ब्लॉसम्स ऑफ स्प्रिंग विद दी फ्रूट्स ऑफ ऑटम; इट कम्बाइन्स हेविन एण्ड अर्थ इति। निश्चप्रचतया शकुन्तलायामेकः सुखलोको विलोपितः परमपरो हस्तसात्कृतः। कविना प्रदर्शितं यत् प्रथमेऽङ्के दुष्यन्तः शकुन्तला च प्रणयकारित्वेन कियत्तुच्छतां परिपोषयन्तौ दृश्येते परं सप्तमेऽङ्के तयोर्योगो भरतस्य मातृपितृत्वेन कियत् सत्यतां बिभ्राणः प्राप्तो भवति। प्रथमोऽङ्कः स्फूर्जनेनोत्क्षेपणेन च दीप्यमानोऽस्ति। तत्र तरलतारुण्ये प्लवमानां महर्षेस्तनूजां, तस्याः सख्यौ चञ्चलतया समुदं धावन्त्यौ, नवाः सुमनोभिर्हसन्तीः वनवल्लरीः, सौरभोन्मत्तां भ्रमरावलिं, पादपान्तर्हितस्य मनोहररूपस्य दुष्यन्तस्य सेचनघटैः पादपेभ्यः पयः प्रददतीनां तिसृणामपि वयस्कानामनसूयाप्रियंवदाशकुन्तलानां

सविस्रब्धं पर्यवलोकनं प्रेक्षामहे वयम्। यदेव मङ्गलमयं नन्दनविपिनं दुष्यन्तमानसोन्मादयित्री शकुन्तलाध्यासाञ्चके तत एव निर्वासितां च भवन्तीं तां वयमीक्षामहे। अस्माद्धि यापितशाकुन्तलबाल्याद्‌रण्यात् तदरण्यं नितान्तमेव भिन्नमेवाभवत् यद् मङ्गलावतारां भरतस्य जननीं शकुन्तलां प्रति शरणं प्रत्यपद्यत। न तत्र पादपान् सिञ्चन्तीनां कन्यकानां दर्शनं भवति, न तत्र ता व्रततयः एव, या दर्शकानां मनांसि क्लेदयन्ति न च तत्र श्यामाकमुष्टिपरिवर्द्धितको हरिणीशावक एव वीक्षितो भवति। तत्र एक एव बालः समस्तमपि कान्तारसंसारस्य सौहृदं प्रीणयन् प्रेक्षितो जायते। स एक एव सर्वेषामपि अनोकहानां प्रियतामुपचयोन्मुखीनां लतानां कमनीयतां, पुष्पाणां वृन्तानाञ्च वन्धुरताञ्चास्मन्यभिव्याप्य परिस्फुलति तत्र पर्णशालामधिवसन्त्यः प्रियताप्रोतचिन्तां वहन्त्यः काश्चन स्थविराः सावहिततया चपलं बालमेवैकं लालयन्त्यो दृष्टा भवन्ति। तत्र वयं शकुन्तलामागच्छन्तीं पश्यामः। सा परिधूसरे वसने वसाना नियमक्षाममुखी धृतैकवेणिः अतिनिष्करुणभर्तुर्विरहव्रतं दधाना शुद्धशीला दृक्पथेऽवतरति सर्वेषामप्यस्माकम्। तस्याः दीर्घकालाभिव्यापिभिस्तपोभिस्तदीयं तदघं प्रदग्धं यत् तया रहो दुष्यन्ते कृतात्संगतादर्जितमासीत्। साम्प्रतं सा नूतनेनैव गौरवेण मण्डितास्ति; सास्त्यधुनोत्तममृदुलमातृभावस्य ललितैव प्रतिमा। इदानीं कस्तां हातुं प्रभवेत्।

इह नाटककारस्तदेव दर्शयन् लक्ष्यते यदसौ कुमारसम्भवे दर्शयामास। स ब्रवीति यत् तदेव प्रेम शश्वद् विजयते तस्यैव प्रेम्णः सततमभिनन्दनं क्रियते तदेव पुनीतं पेशलं च प्रेम कथ्यते यन्नैतिकादर्शाधिष्ठितं भवति। नैतिकतामवज्ञाय यत् स्वच्छन्दतया निरङ्कुशतया चाचरणे नीयते तदचिरेणैव म्लायति उपरमते च। एष प्राक्तनकालस्य कविस्तत् प्रेम प्रेम न मन्यते यद् बाह्यप्रदर्शनवर्तीं विच्छित्तिमाश्रित्य विजृम्भते। प्रेम्णोऽन्तिमं चरमं वा लक्ष्यं भवति श्रेय इति तदीयः सुदृढो विचारः। स वदति यत् तत्प्रेम न सुन्दरं न च पावनं न चानन्तं पुरुषस्य नार्याश्च, यदस्ति सङ्कीर्णं व्यष्टिगतं च; यन्नात्मानं समाजे वितनोति न च यत् कुटुम्बे अतिथिषु प्रतिवेशिषु च स्वं विदधाति विस्तीर्णम्।

भारतस्य कृते प्रवृत्तिरपि प्रिया निवृत्तिश्च प्रिया। तदुभयत्र स्निह्यति। भारतं सांसारिकजीवनप्रयोजनेन तु आत्मानं बहुषु प्रतिष्ठापयति तत् तत्र जात्युपजात्यादिकं किमपि नोपेक्षते। तद् भौतिकतार्थं विस्तार एव रन्तुमीहते परं

तदाध्यात्मिकजीवननिमित्तेन रह एव निवासं कामयते । तपोवेदिकायान्तु तदेकाक्येव भूत्वा निषीदति । प्रवृत्तिनिवृत्तिविषयकयोरनयोर्विचित्रयोः सिद्धान्तयोर्मध्ये वर्तते एकतेति कालिदासो मन्यते । कुमारसम्भवं अभिज्ञानशाकुन्तलं च स इमामेकतामेव दर्शयितुमलेखीत् । सिद्धान्ताविमौ एकतस्तु आत्मानं गार्हस्थ्यजीवने विनिवेशयतोऽपरतश्च विरजस्के जीवने हि सन्निवेशयतः । कविरुटजानां यं संसारमसृजत् तत्र मानवीयः पुत्रः सिंहशावकैः सार्धं क्रीडन् दृश्यते उटजवासिनः साधोश्च आत्मा गृहजीवनं तपोमयजीवनञ्चोभयमपि बिभ्रत् परिदृश्यते ।

वैराग्योन्मुखानां संन्यासिनां पर्णशालामाधारशिलां कृत्वा कालिदासः गृहस्थस्य गृहं प्रतिष्ठापयन् प्राप्यते । कामस्य सम्बन्धमैन्द्रियवासनातो दूरे विधाय स तं विरक्तताया: पूते शुभे च सिंहासने आसयन् परिलक्ष्यते । भारतीयधर्मग्रन्थेषु कामो धर्मोपेतः प्रदर्शितोऽस्ति । तस्योपरि पूर्णतया तैर्यम-नियमानां शासनं स्थापितमस्ति । कालिदासः सौन्दर्यतत्त्वैरुद्ग्रथितं विधाय तं कामसम्बन्धमाकलयति । तदुत्थापितायां सुन्दरतायां निर्मलता मर्यादा श्रेयश्च प्रकाशन्ते । सा स्वैः सर्वैरप्यङ्गैः सकलमपि संसारं परिष्वजते । सा त्यागमयी वर्तते; सा प्रकृत्या न रजसाविला, तस्या अन्तराले न मानवस्य मानव्याश्च धर्मादपेता असंयता मलिना च प्रीतिः अणुमात्रमपि स्थानं लब्धुमर्हति । सा शाश्वतिकशान्तिमात्मनि सन्निदधाति । सर्वा अपि चञ्चलता उच्छृंखलताश्च तत्र तथैव निगृहीता भूत्वा संलुचिता भवन्ति यथा शुभविधानस्य समुद्रे सकलान्यपि विध्वंसकारीणि स्रोतांसि दासीभूतानि भूत्वा सन्तिष्ठन्ते । तस्मात् ईदृशं प्रेम पाशविकात् अनियन्त्रिताच्च प्रेम्णो ह्युत्कृष्टतरम् । कालिदासः शाकुन्तलं समुपस्थाप्य जनतामिदमेव आदर्शं धर्म्यं पावनं प्रेम परिग्रहीतुं प्रेरयति ।

( २७ )

## कालिदासस्य जीवनदर्शनम्

महामहिमशाली कविकुलालङ्कारः कालिदासो भरतवसुन्धरायां महतीमेवालौकिकशेमुषीश्रियं परिगृह्य प्रादुर्बभूव। अतिक्रान्ता यद्यपि सहस्रद्वयसमाप्तिरोहिततां गतस्य तस्य ज्योतिष्मतो नक्षत्रस्य, परं यमालोकमिलायामसौ वितनुते स्म वसुमतीयं तेनात्मानं चिराद् गौरववतीं मन्यमाना सगर्वं नैजमौलिमुन्नमयन्ती समुदं नन्दति साम्प्रतमपि।

महाकवेः कालिदासस्य दृक् प्रालेयनगादपि तुङ्गा पाथोधेरपि गभीरतरा बभूव। तत्र यथा शास्त्राणामखिलानां प्रभातितरां दीप्तिमती भूत्वा विबभौ तथैव तत्र ललितानां सर्वासामपि कलानां कमनीया कान्तिश्चाचीचकासत। तदीये कवित्वे तस्या[1] र्थवित्त्वविषयिणी श्रीश्च संस्फुरति; एतावदेव न तत्र तस्य व्यवहार[2]पटीयस्कताया आभापि सोमुदीति। स व्यावहारिके हि आदर्शे प्रत्येति स्म न च वाचिके। तदीयं विपश्चित्त्वं न केवलं विचक्षणवृन्दारकाणां हिताय शोभते-अपितु तज्जगतीतलवर्तिनां समेषामपि पुंसां कृते विराजते। तदीयं ज्ञानं न नीरसं तत्र प्राणि-मनः-परिप्रीणनक्षमा सान्द्रा स्निग्धता समुच्छलति। तस्य कविता यथा भुवमेव नाकं विधातुं प्रयस्यन्त्यवलोक्यते न तथा सा तां दिवं गमयितुं प्रयतमानावाप्यते। तस्य रचनानां विपुलेयमाकांक्षा यन्मानवः स्वकर्तव्यानि स्वं धर्मञ्च त्रायमाणः क्षितेः सर्वविधामपि विभूतिं सर्वाणि च सातानि सविवेकमुपभुञ्जानो भूभुवनमुदग्रतरमनुष्ठातुं चेष्टेत। सः कविः सांसारिकेषु सौन्दर्येषु[3] पारमार्थिकं सौन्दर्यमवलोकयाञ्चकार। यद्यप्यसौ प्रकृतेरुत्सङ्ग एव सततं जीवनं नयन् प्रतिभाति परमेतदपि प्रतिलक्ष्यते यदसौ नैजवसतिं प्रभूतसम्पदैश्वर्यामितवैभवविलासविभ्राजमानेषु नगरेषु चक्रे। दैवतभावे श्रद्दधानापि तस्य धीः स्वीयामभिरुचिं मानवभावे निबबन्ध। मानवः कः? सः क्व वसति, क्व क्रीडति, क्व हसति, क्व लपति, क्वोपविशति, क्व तिष्ठति, क्व तुष्यति, क्वानुरज्यति, क्व विरज्यति, क्व स्वपिति, क्व च जागर्तीत्येतत्सर्वं सम्यगज्ञासीत्। स मानवं तेभ्यः

[1] रघौ ४,८। [2] शाकुन्तले, डॉ० कपिलदेव प्रणीते, पृ० २७०, २९१।
[3] रघौ १०, २०।

पदार्थेभ्यो नारादाकृषति येष्विन्द्रियवृन्दं रमते परं तमजस्रं त्यागे तपसि यज्ञे च प्रवर्तयन्नेव संलक्ष्यते। मानवस्यात्मनोऽसीमत्वादाकाङ्क्षति स यदसौ (मानवः) स्वीयां महनीयतां स्वकीयं रूपं स्वकीयामसीमाञ्च शक्तिमभिजानीयात्। स न यस्मिन् कस्मिन्नप्येकस्मिन् क्षेत्रे स्वं सीमितं विधाय सन्तिष्ठेत। सः सर्वत्रापि विहरेत्, सर्वत्रापि रुचिं दर्शयेत्, सर्वानपि भोगान् उपभुञ्जीत परं तथा कुर्वाणो न स्वविवेक-प्रयोगं विस्मरेत्। महाकवेः कालिदासस्यैषोपश्लोकनीया दृष्टिर्जीवनम्प्रति तदीयेयमुदारा धीः स्फुटतयैव तस्य तत्तद्वचनानां साहाय्येन सचेतसां पुरः समुपस्थिता सञ्जायते। अतस्तदुक्तीनामिह परिभावनमुद्धरणानाञ्च समुपस्थापनं कृतं स्यात्।

कालिदासो जीवनस्य सौन्दर्यं सार्थक्यं समुत्कर्षञ्च यत्र यत्र प्रेक्षाञ्चक्रे स्वीयेषु काव्येषु तत् तत् परमपेशलेन वक्रोक्तिवन्धुरेण मार्गेणाभिव्यानक्। स जीवनस्य सुषमापन्नार्ति-प्रशमने विवेद तस्मादसावभिदधौ—

"आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम्।" (मे० पू० ५३)

अर्थस्य संग्रहं तमेव सः प्राशंसत् यस्त्यागायानुष्ठीयते। वक्ति च सः—

"आदानं हि विसर्गाय सतां वारिमुचामिव" (रघौ ४,८६)

स तदेव जीवनं धन्यममंस्त यदस्ति तपःपूतम्। तदीयोऽयं द्रढीयान् विश्वासो यत् तपोऽन्तरेण न सिद्धिः क्वापि सम्भवा; तस्मात् सः सर्वत्रापि तपो-महिमानं गायन् आसाद्यते। शाकुन्तले सः—

"वल्मीकार्धनिमग्नमूर्तिरुरसा सन्दष्टसर्पत्वचा" (७,११) इत्यादिना,

"कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीं।
दिदृक्षवस्तामृषयोऽभ्युपागमन् न धर्मवृद्धेषु वयः समीक्ष्यते॥" (कु० ५,१६)

कुमारसम्भवे इत्यादिना च स्वपाठकवर्गम्प्रति नैजं भावानुबन्धनं कस्मिन् जीवनेऽस्तीति सोत्कण्ठं प्रकटीकरोति। सः सुदृढभावेन विश्वासमिमं निदधाति यन्मानवस्य भद्रं पूज्यानां वरिवस्यायामस्ति सन्निहितमतोऽभिदधाति—

"प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" (रघौ १,७९),

कविर्यशःशून्यं जीवनं न वरं मेने। तद्विधाज्जीवनात्तु स मरणमेव महीय-स्त्वेनावागमदतः स प्राह रघुवंशे—

"किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु"॥ २, ५७॥

जीवनस्य शिश्नोदरत्वे कविरयं नितान्तमेव जुगुप्सां निदधाति स तु तज्जीवनमेव जीवनं मन्यते यत्र नाना सद्गुणाः विभ्राजन्ते तद्-दृष्ट्यां जीवनस्यार्थोऽस्ति—"गुणवत्ता" अतः स शंसति—"पदं हि सर्वत्र गुणैर्निधीयते"। (र० ३, ६२) सत्यमेवेदं जगति प्रतिपदमनुक्षणञ्चेदमेव प्रत्यक्षं दृश्यते। जीवनस्य सार्थक्यं वर्तत उपकारकर्मणि। यज्जीवनं परार्थं प्रयुज्यते तदेवास्ति जीवनं श्लाघ्यमित्येपास्ति कवेर्विचारणा। स तामेवेत्थमाकलयति—

"पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः" (र० ५, १६)

न केनापि मानवेन श्रेयसि तृप्यते—इत्येतद् बोधयति यन्मानवः प्रकृत्या श्रेयःशीलोऽस्ति चेत्स आत्मानं श्रेयसि न नियोज्य नियोजयत्यन्यत्र तदा स तथा केनापि दोषेण प्रेर्यमाण एव कुरुते तस्य स्वतः श्रेयस्यतृप्तिशीलत्वात्। तदीयमूलप्रकृतेः श्रेयःप्रियत्वात् सिद्धमिदञ्च यन्मानवस्यान्यथाचरणत्वं यत् प्राप्यते तदुपाधिदोषादेव। इदमेव सर्वं विचिन्त्य कविर्भणति अप्रस्तुतविधानात्मिकया रीत्या—

"उष्णत्वमग्न्यातपसम्प्रयोगाच्छैत्यं हि यत् सा प्रकृतिर्जलस्य॥"

(र० ५, ५४)

तज्जीवनमपि न कविः साधु मन्यते येनोपकृतो न प्रत्युपकृतः। अतः स उदीरयति—

"प्रतिप्रियञ्चेद् भवतो न कुर्यां—
वृथा हि मे स्यात् स्वपदोपलब्धिः॥" (र० ५, ५६)

कविः स्वकृतौ स्वकीयमभिमतं वस्तुभावं वा अर्थान्तरन्याससुखेन प्रकटीकुर्वाणः प्रायेण प्राप्यते किं वा स स्वकीयान् विचारान् अप्रस्तुतविधानात्मकेन द्वारेणाभिव्यक्ततां प्रापयन् विलोक्यते। यः पुरुषः स्वेन जीवनेन सर्वेषामप्यन्येषां जीवनमभिभूय सन्तिष्ठते तस्य पुरुषस्य जीवने प्रीतिं निदधानः कविः प्रब्रवीति कीदृश्या वचोभङ्ग्येति दृश्यताम्—

"नक्षत्रताराग्रहसङ्कुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः" (र० ६, २२)

विपदि निपत्य मानवस्य अधीरताया आश्रयणं नास्ति किमप्याश्चर्यं वा वचनीयत्वम्। मानव-मानसस्य तु धर्म एवायं यत् सुखमवाप्य तत्प्रसीदति दुःखञ्चाधिगम्य विषीदति। तस्मान्न विचारवान् जनस्तदवस्थां गतं तं जनं विलोक्य

## वेणीसंहारम्

अमरवाणीपर्युपासकैर्नाट्यशास्त्र-पारावारीणैः स्वसिद्धान्तानां प्रतिपादनार्थं येभ्यो रूपकेभ्यो हि उदाहरणान्यचीयन्त तेषु वेणीसंहारं नाम नाटकमुल्लेखनार्हमस्ति प्रामुख्येण। वेणीसंहारं भट्टनारायणो रचयाम्बभूव। आसीत् सः कान्यकुब्ज-( कन्नौज )-वास्तव्यः। न सः स्वरचनायां नैजजीवन-परिचयं स्तोकमपि प्रददावतस्तस्य जीवनविषयक उदन्तस्तमोगर्भे एव लीयते। वङ्गनरेश आदिशूरस्तं दुर्भिक्षजनितामापदं विनिवारयितुं यज्ञार्थमाजुहावेति केषाञ्चनेतिहासविदां मतम्। वदन्ति च ते यदसौ महीपतिः सप्तमेशवीयाब्दे समजनि। यद्येतत्कथनं युक्तं तदा भट्टनारायणस्य स्थितिकाल ईशवीयं सप्तमं शतकं सिद्ध्यति किञ्च तस्यैव वङ्गाधिराजस्य च्छायायां स वसतिञ्चक्रे—इत्येतदप्यनुमितं भवति। मन्ये स एव विद्वत्प्रियो राजा 'मृगराजलक्ष्मे'त्येतेनोपाधिना तं कविकुलमूर्द्धन्यं विभूषयाञ्चकार। केचित् कथयन्ति स गुप्तराज्यानेहसि चतुर्थे खिष्टीयशतके प्रादुर्बभूव। अन्ये वदन्ति यद् वहिरङ्गेभ्यः प्रमाणेभ्यस्तस्य काव्यालङ्कारसूत्रवृत्तिकारात् वामनात् प्राक्तरत्वं निष्पद्यतेऽतस्तस्य समयो निश्चप्रचतया सप्तमशतकवर्ती प्रतीयते। वामनः स्वकीये ग्रन्थे भट्टनारायणकृताद् वेणीसंहारादुद्धरणमेकमुद्धरन् प्राप्यते तस्मात् सः अष्टमशतके सञ्जाताद् वामनान्नूनं प्राचीनतर इति नः प्रतिभाति।

वरीवर्ति वेणीसंहारस्य कथावस्तुन आधारो महाभारतम्। द्रौपदी-वेणी-बन्धनसम्बन्धिनी घटना या महाभारते वर्णितास्ति तामेवादाय नाटककारो नाटकं स्वकीयं प्रणिनाय। परं नाटकीयां सुन्दरतां सञ्चारयितुं स तत्र यथेष्टं परिवर्तनमपि चकार।

सन्ध्यवस्थार्थप्रकृतीनां प्रतिष्ठापनं नाटके यथास्थानं विधातव्यमिति यन्नाट्यशास्त्राभिमतं तस्य पालनं वेणीसंहारे पूर्णतयास्ति विहितम्। सन्ध्यङ्गयोजनाया-

मवश्यं नाट्यशास्त्रप्रदत्तः क्रमो नानुसृतः समुपलभ्यते। तथा हि, नाट्यविषयकेषु ग्रन्थेषु मुखसन्ध्यङ्गेषु प्रथमं विलोभनस्याङ्गस्योल्लेखः कृतस्ततश्च प्राप्तेः परं वेणीसंहारे प्रथमं प्राप्तेः ततश्च विलोभनस्योल्लेखोऽधिगम्यते। एवमेवान्यत्रापि सन्ध्यङ्गयोजनायां समासाद्यते व्यतिक्रमः। वेणीसंहारनाटकगतकथावस्तुनोऽस्ति प्रमुखं साध्यं द्रुपदतनयाया वेण्या उत्तंसनम्। कार्यस्यास्य बीजमस्ति युधिष्ठिरस्यामर्षो न च भीमस्य। तत्संरम्भोदयमन्तरेण संयुगोद्घोषणा न सम्भवितुं शोक्नति। सम्परायं विना चिकीर्षितस्य कार्यस्य सम्पादनमपि सर्वथैव दुर्घटम्। नाटकस्य प्रथमेऽङ्के विद्यमानात्—

"निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥"

इत्येतस्माच्छ्लोकात्—

"यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता॥
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते॥"

इत्येतच्छ्लोकं यावत् युधिष्ठिरस्य क्रोध-बीजमेवोप्तम्। अतः प्रथमेऽङ्के मुखसन्धिः शोभते। द्वितीयस्मिन्नङ्के प्रतिमुखसन्धिरुपनिबद्धोस्ति। तत्र युधिष्ठिरस्य मन्युरूपं बीजं विन्दुत्वं प्रयाय प्रसरति। कविर्भानुमती-दृष्टं स्वप्नं वर्णयित्वा 'सह भृत्यगणं सबान्धवं समित्र' मित्यादि दुर्योधन-व्याहृतं वाक्यं निधाय कौरवाणां विनाशस्य प्रत्यासन्नतां सूचयति। तृतीयस्मादङ्कात् गर्भसन्धिर्भवति प्रारब्धः। सोऽङ्कं पञ्चमं यावदवतिष्ठते। षष्ठेऽङ्के—

"भीमेन प्रियसाहसेन रभसात् स्वल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः॥"

इत्यतोऽवमर्शसन्धेर्जायते प्रारम्भः। स च भीमाभिज्ञानकारिणीं घटनां यावदवस्थितोस्ति। निर्वहणसन्धिस्ततः प्रारभ्यते यतो भीमं कञ्चुकी अभिज्ञातुमर्हति। सः सन्धिः पर्यवस्यति नाटकपर्यवसान एव।

शास्त्रीयदृष्ट्या वेणीसंहारस्य कथावस्तुनो विकासः सन्नपि युक्तरूपो नाटकीय-

कला-विधानदृष्ट्या न निर्दोषः सिद्ध्यति। नाटकस्य वेणीसंयमनरूपा प्रधान-घटनात्मानं भीम-प्रतिज्ञया सार्धं निबध्नाति। परं नाटककारो न महाभारतस्य समस्तस्यापि कथावस्तुनः समावेशनविषयकं लोभं संवरीतुं पारयति तस्मात् सोऽसम्बद्धा अपि घटनाः संयोजयितुमीहते। एष तदीयोऽभिनिवेशः कथा-गतिं प्रति बाधकः सञ्जातः। वीररसप्रधाने रूपके दुर्योधन-भानुमत्योः प्रणयचित्रणं नितान्तमनुपयुक्तं वर्तते। काव्यप्रकाशकारः साहित्यदर्पणकारश्चोभौ भृशमुपक्रोशन्तौ विलोक्येते प्रवृत्तिं ताम् प्रतीच्यः प्रधीः डॉ० कीथोऽपि न सङ्गतां मन्यते। ये खलु नाटकस्यास्य नायकं दुर्योधनं मन्यन्ते ते प्रणयचित्रणस्यास्यौचित्यं प्रतिपादयन्ति। परं सत्यपि नायकत्वेन दुर्योधनेऽङ्गीकृते नेदं प्रणयदृश्यमुचितं प्रतिभाति। न तेन हि कथावस्तुनो गतिः प्रकर्षं वा प्रौढतामुपैति न च दुर्योधनस्यैव चरित्रमुच्छ्रितत्वमासादयति। एवमेव तृतीयाङ्कस्थितं कर्णाश्वत्थाम्नोर्वाग्युद्धमतितरां प्रभावपूर्णं सदपि न किमपि नाटकीयं प्रयोजनमुद्दीपयति अतस्तदपि नापेक्षायै कल्पते। अश्वत्थाम्नः शस्त्रत्यागानेहसि भीमकर्तृक-दुःशासन-वधचित्रणेन तत्र च दुःशासन-रक्षणविषयिकायाश्चेष्टाया अश्वत्थाम्नो विरतत्वस्यालेखनेन न भीमस्य महत्त्वोपचयमृच्छति। अश्वत्थाम्नि दुःशासनं गोपायितुं प्रक्रान्ते सति यदि भीमस्तदुरःशोणितपाने साफल्यमध्यगमिष्यत् तदा भीमस्य गौरवमवर्त्स्यत्। षष्ठे अङ्के चार्वाकराक्षसमवतार्य कथामावर्तयितुं विधीयमानः प्रयासोऽपि नापेक्ष्यते। तद्घटनायोजनया तु धीरोदात्तनायको युधिष्ठिर उपहासं गमित इव प्रतीयते। तामवस्थां नीतस्य तस्य तत्कारुणिकं चित्रणं न कमपि प्रभावं जनयति। तत्त्वस्वाभाविकमेव प्रतिलक्ष्यते।

नाटकेऽस्मिन्नाटककारेण महाभारतीयानां बहुलानां घटनानां समुपस्थापनार्थमीहा तु कृतास्ति परं न सः तत्सकलघटनामुक्ताः एकस्मिन् सूत्रे प्रोतुमक्षमत। न यावन्नाटकीया कथा विकास मनु धावेत् न च यावत् सा धारेव गतिशीला स्यात् तावन्नाटक-कला न गरिमाणं गन्तुमर्हेत्। नाटकेऽत्रैतद्विधमपि वैशिष्ट्यं नोपलभ्यते। नाटककारो वर्णनेन तु कथां वितन्वानः संलक्ष्यते परं स तत्र (कथायाम्) व्यापारेण गतिं प्रददानः समवाप्यते। चतुर्थेऽङ्के सुन्दरककृतं रणावनिवर्णनमस्ति तु कवित्वकलितं परं तत् कथावस्तुनो गतिं श्लथयति। अस्ति च तत् विगलितप्रभावम्। एवमेव भानुमतीकृतं स्वप्नवर्णनमपि न तावन्तं विस्तारमपेक्षते यावान् स तत्र वीक्षितो भवति। इत्थं वेणीसंहारस्य

विभिन्ना घटना व्यष्ट्यां तु सन्ति प्रभावपेशलाः रसाँप्लुताः मर्म्मस्पर्शिन्यश्च परं समष्ट्यां ता नाटकगतिं बाधमाना नाटकीयां प्रभविष्णुतां मन्दीकुर्वन्ति ।

नाटककारेण कथावस्तुनि क्वचित् क्वचिद् भाविनीनां घटनानां सूचनापि प्रदत्तास्ति किञ्च सोऽपि भवभूतिरिव पताकास्थानकं गण्डञ्च प्रयुञ्जानः प्राप्यते । आंग्लीयेषु रूपकेषु तद् 'ड्रामेटिकआइरनो'ति व्याह्रियते । द्वितीयस्मिन्नङ्के दुर्योधनो यदैव स्वां महिषीं भानुमतीं स्वकीयोरुस्थलमध्यासयितुं निवेदयति तदैव कञ्चुकी आगत्य 'भग्नमि'ति भणति। अनेन व्यतिकरेण दर्शको दुर्योधनोरुभङ्ग-विषयिण्या भाविन्या घटनायाः सङ्केतमधियाति । दर्शकोऽपि तत्राञ्जसा भग्न-मित्येतत्पदमूरुयुग्मेन सहान्वेति । युगान्तरे भयावहेन मरुता रथकेतनं भग्नमित्य-वगतं जायते । अत्र तत्स्थलस्य पङ्क्तय उद्ध्रियन्ते—

"राजा—तत्किमित्यनास्तीर्णं कठिनशिलातलमध्यास्ते देवी ।

यतः—लोलांशुकस्य पवनाकुलितांशुकान्तं
त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।
अध्यासितुं तव चिरं जघनस्थलस्य
पर्याप्तमेव करभोरु ममोरुयुग्मम् ॥

(प्रविश्य पटाक्षेपेण सम्भ्रान्तः)

कञ्चुकी—देव ! भग्नम् ।

राजा—केन ?

कञ्चुकी—देव, भीमेन ।

राजा—कस्य ?

कञ्चुकी—भवतः ।

राजा—आः ! किं प्रलपसि ?

भानुमती—अज्ज ; किं अणत्थं मन्तेसि ।

राजा—धिक् प्रलापिन् ! वृद्धापसद ! कोऽयमद्य ते व्यामोहः ?

कञ्चुकी—देव न कश्चिद् व्यामोहः । सत्यमेव ब्रवीमि :—

भग्नं भीमेन भवतो मरुता रथकेतनम् ।
पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ ॥"

एतद्विधा कौतूहल-सृष्टिः सृष्टा नाटककृता । गण्डाख्येयमस्ति योजना ।

विश्वनाथमतेनैतादृशी योजना 'पताकास्थानकं तृतीय'मस्ति। अन्यत्रापि अहि-शतनकुलादिपदप्रयोगस्थले नाटककारः कौतूहलोत्पादनस्य कृते प्रयतमानोऽत्रा-प्यते। वस्तुतो नाटकस्य कथावस्त्ववश्यमेव रुचिरं परं नाटकीया कला न तत्र समुचितां सज्जां श्रयन्ती दृग्गोचरीभवति।

नाटकस्यास्य नायको दुर्योधन इति केचन, तदपरे भीमो नायक इति, तदितरे नायको नाटकस्यास्य युधिष्ठिर इति मन्यन्ते। ये दुर्योधनं नायकं मन्यन्ते; तेषां कथनमेतत्—

( क ) दुर्योधनस्य चरित्र-चित्रणे परिवर्तनं विशिष्टतया विधाय नाटक-कारस्तं ( दुर्योधनम् ) चारित्र्येणोच्चैरुत्थापयितुं यतमानो दृश्यते। इदं ज्ञाप-यति यत् कवेर्दुर्योधनस्य नायकत्वमभिलषितम्।

( ख ) प्रथममङ्कं विहायावशिष्टेषु सर्वेष्वप्यङ्केषु दुर्योधनो रङ्गमञ्चे वीक्ष्यते। प्रथमेऽङ्केऽपि सः स्वकार्यकलापम्प्रति प्रेक्षकाणां दृष्टिमावर्जयन् विलोक्यते।

( ग ) दुर्योधनगता शूरतात्मसम्मानभावना च तमस्मदादरभाजनतां प्रापयति। अस्ति स उद्भटो भटो विश्वसनीयः सुहृत् स्नेहार्द्रश्च भ्राता। न स भीम इव विकत्थनाप्रियः। तदीयानि दौर्बल्यानि अस्मदीयां समवेदनां तदर्थं जागरयन्ति। मानवतायां स भीमान्महीयान्। सः पराजितोऽपि विजेतुर्भीमाद् गरीयान्।

( घ ) नाटकीयं कथावस्तु दुर्योधनहेतोरेवातितरां मनोग्राहिणी हृदयाकर्ष-णकारिणी च।

नाटकस्य नायको भीम इत्येतन्मानिनां मतमेतत्—

आदिमादङ्कादन्तिमाङ्कं यावद्—

"चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानापविद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः॥"

इत्येतां प्रतिज्ञां बिभ्राणो भीमः सर्वत्र गर्जन् श्रूयते। द्वितीय-तृतीय-चतुर्थाङ्केषु स रङ्गमञ्चे नोपस्थितः प्राप्यते परं तदीयस्य कार्यभारस्य सूचनां प्रेक्षकाः संलभमाना उपलभ्यन्ते। द्वितीयस्मिन्नङ्के कञ्चुकी भीम-मरुता रथकेतन-भङ्गस्य सूचनां प्रददाति। तृतीयस्मिन्नङ्के भीमस्यैषा गर्जना नेपथ्ये श्रुता भवति—

"कृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥"

चतुर्थेऽङ्के सुन्दरको भीम-पराक्रममुपस्थापयन् प्राप्यते । इत्थं भीमो वेणीसंहारीय-कथावस्तुनो मूलाधार एव सिद्ध्यति । वेणीसंयमनाख्या घटनैव प्राधान्येन भीममवलम्बते । वेणीसंहारहेतोर्भीमस्य—

"मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन ॥"

इत्येषा प्रतिज्ञैव बीजं प्रतीयते । भीमः प्रतिज्ञामेतां पूरयितुमादितोऽन्तपर्यन्तं यत्नशीलः समासाद्यते । तत्कोपेन तु ज्ञातं भवतीदं यत् स आज्ञामवज्ञायापि स्वप्रतिज्ञा-पूरणाय समुद्यत आसीत् । चेन्नाटकाद् भीमस्य व्यक्तित्वं पृथक् कृतं स्यात् तदा तत्रावशिष्येत एव किम् ? नाटकस्य नामापि वस्तुतो भीमस्य प्राधान्यं साधयति । अतो भीम एव नाटकस्यास्य नायको मन्तव्यः ।

एतस्य नाटकस्य नायकत्वं हि युधिष्ठिरे समुल्लसतीत्येतद् अभिदधतां विचारा इमे—युधिष्ठिरो नायक-गुणान् निदधाति । स महासत्त्वो गम्भीरोऽविकत्थनः स्थिरो निगूढाहङ्कारो दृढव्रतोऽस्ति । सः सत्यं पातुं कुल-क्षयाशङ्कया शान्ति-प्रतिष्ठापनप्रयोजनेन युद्धाद् दूरीभवितुं सन्धिञ्च कर्तुं नितान्तमेव प्रयत्नं कृतवान् । शान्तिप्रियता तस्मिंस्तां सीमां गतासीद् यत् सा न तस्य भ्रातृभ्योऽरोचत । सः न कदापि मनागप्यविमृश्यकारितायां मतिं ववन्ध । नितरामयतत यद् दुर्योधनो नैजं दुरभिनिवेशं परित्यजेत्; कृतेऽपि महति प्रयासे यदा सः ( दुर्योधनः ) कीदृशमपि सन्धिं कर्तुं नोद्यतः सञ्जातस्तदा बाधित एव भूत्वा युधिष्ठिरो युद्धमजूघुपत् । आसीदसौ परमसौम्यः परमोदात्तस्वभाव औदार्यावदातमानसः । रूपककारस्तस्य यं क्रोधमस्मत्पुरतो निदधाति तत्र सौम्यता तेजस्विता च इत्येते द्वे अपि विशिष्टे शोभेते—

"यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते ॥"

अरयोऽपि युधिष्ठिरस्य क्षमाशीलतां श्लाघन्ते । तेऽपि विश्वसन्ति यद्युधिष्ठिरस्तेष्वपि न द्वेषधियं निदधाति । शालीनत्वात् सर्वशुभचिन्तनकारित्वात् तस्य, तेऽपि तस्मिन् श्रद्दधते । धृतराष्ट्रस्तमधिकृत्य वक्ति दुर्योधनमाश्वासयन्—"वत्स एवं गतेऽपि मत्प्रार्थनया किन्न करोति युधिष्ठिरः ? अन्यच्च, सर्वमेवापकृतं नानुमन्यते ।" युधिष्ठिरस्य भ्रातृप्रेमास्त्यनुकरणीयम् । भीमस्य मृत–निधनवार्तामाकर्ण्य सः स्वयमपि प्राणान् हातुं चितायां, सञ्जायते सन्नद्धः । तस्य युद्धजनितजय-पराजयरूपफलभोक्तृत्वादथ च नाटकान्ते "प्रीततरश्चेद् भगवांस्तदिदमस्त्वि"ति भरत-वाक्याभिधानकारित्वात्, स एव नाटकस्यास्य नायक इति ।

नाटके यादृशमुज्ज्वलतरं चरित्रं नाटककारेण युधिष्ठिरे दर्शितं न तादृशं तत् स न भीमे न च दुर्योधने दर्शयन् समवाप्तो भवति तस्मात् कवेरपि युधिष्ठिरस्य नायकत्वमिष्टमिति प्रतीयते ।

उदात्तचरित्रेषु पात्रेषु श्रीकृष्ण एव प्राग्रहरः । नाटककारेण स भगवदवतारत्वेन चित्रितो न सामान्यपुरुषत्वेन । "प्रवेशकालः किल तत्र भगवतः पाराशर्यनारदतुम्बरुजामदग्न्यप्रभृतिभिर्मुनिवृन्दारकैरनुगम्यमानस्य भरतकुलहितकाम्यया स्वयं प्रतिपन्नदौत्यस्य देवकीसूनोः······" इत्यादिकैः प्रथमांके समुत्थापितैर्वाक्यैस्तस्य सर्वश्रेष्ठव्यक्तित्वं नाटककार आलिखति । स दुर्योधनसभायां गत्वा दौत्यकर्म येन पाटवेनानुष्ठितवान् यां हि स राजनीतिकीमाश्चर्यकरीं कुशलतां दर्शितवान् तत् पाटवं सा च कुशलता रूपककृता विलक्षणेनैव प्रकारेण प्रकटीकृतास्ति । दर्शको रङ्गमञ्चे तत् तत् कार्यं कर्तुं नोपस्थितं पश्यति तं परं तदीया सा सर्वापि पटीयस्कता तत्समक्षे समुपतिष्ठते । सः षष्ठेऽङ्के एव समुपस्थितो जायते नाटक-कथायाः । सूत्रधारः स एव इत्येतत् सत्यं कस्य न सचेतसः पुरः समुपस्थितं भवति ? स एव युधिष्ठिरमभिषेक्तुं द्रौपद्याः केशसंयमनोत्सवञ्चारचयितुमादिदेश । नाटकस्य समाप्तौ नाटककारस्तेनैव "तत् कथय महाराज, किमस्मात् परं समीहितं सम्पादयामि" इति व्याहारयति । एतत्सर्वमेव श्रीकृष्णस्यानन्यगामिनीं महत्तां ज्ञापयति । वस्तुतः एष श्रीकृष्ण एव यत्साहाय्येन यद्राजनीतिचातुर्येण यल्लोकोत्तरप्रतापेन पाण्डवाः स्वसाध्यस्य साधने तस्मिंश्च महासमरे विजयश्रियमधिगन्तुं प्राभूवन् यत्र द्रोणाचार्य-भीष्मपितामह-कर्णप्रभृतयोऽजय्यनिखिलविश्वसुविदितशौर्यास्तद्विपक्षे समतिष्ठन्त ।

पुरुषपात्रेषु कर्णोऽश्वत्थामा च प्रमुखपात्रे स्तः । अश्वत्थाम्नश्चरित्रे विद्येते द्वे विशिष्टते वीरपुरुषत्वं पितृभक्तत्वं च। पितृ-निधनोदन्तमाकर्ण्य सोऽतितरां दूयते । तच्छोकेनाहतो भूत्वारातिषु स्वरोषस्य यामभिव्यक्तिं विदधाति सः, सा नितरामेवाभिनन्दनीया । तदीयः प्रभावः सर्वत्राभिव्याप्तो भूत्वा विजृम्भते । सेनानीत्वत्वशुश्रूषायां समुपस्थितं प्रत्यूहं विलोक्य स यां प्रतिज्ञां परिगृह्णाति सापि नास्वाभाविकी । परं प्रतिज्ञाबद्धः स यदा शत्रोर्दुःशासनं रक्षितुं न शक्नोति तदा सा कृता प्रतिज्ञा तस्मिन्नेवेऽनुशयमुत्पादयति किञ्च कर्त्तव्यापूर्तिर्ग्लानिम् । रूपककारस्तस्य वक्ष्यमाणामेतामवस्थामालिख्य तच्चरित्रमुदग्रतां प्रापयन् प्राप्तो भवति :—

"सत्यादप्यनृतं श्रेयो धिक्स्वर्गं नरकोऽस्तु मे ।
भीमाद् दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम् ॥"

नाटके कर्णो महोद्भटवीराग्रणीत्वेन चित्रितः परं तदभिहितानि खलु "एवं किलास्याभिप्रायो यथाश्वत्थामा मया पृथिवीराज्येऽभिषेक्तव्य इति । तस्याभावाद् वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्रहणमिति तथा कृतवान् । एतदर्थञ्च कौरव-पाण्डव-पक्षपात-प्रवृत्त-महासंग्रामस्य राजकस्य परस्परक्षयमपेक्षमाणेन तेन प्रधान-पुरुषवध उपेक्षा कृता ।" इत्येतदादीनि वचांसि तच्चरित्रमपकर्षं नयन्ति ।

नारी-पात्रेषु द्रौपदी-भानुमत्यौ स्तो मुख्ये। नाटकाद् द्रौपद्या वीरक्षत्रियाङ्गनात्वस्य परिचयः समवाप्यते । तस्याः क्रोधे वीरवंशोद्भूतायास्तनयाया, वीरवंशस्य वीरस्नुषायास्तेजस्विता विद्युदिव परिस्फुरन्ती समवलोक्यते । "णाह, उदासीणेसु तुम्हेसु मह मण्णु, ण उण कुविदेसु ।" इत्यादीनि तस्या वचनानि कौरवकृतावमानना-जनित-क्रोधानलज्वालया सन्तप्यमानं तस्या मानसमस्मत्पुरतः सन्निदधति । परमन्ततो गत्वा द्रौपद्याः कोपो नाटकीयकथावस्तुनो न बीजमिव प्रतिभाति । अवान्तरबीजत्वेनैव तस्याः क्रोधः प्रतीयते ।

भानुमती नाटके पतिव्रतपरा नारी इव चित्रितास्ति । दृष्टादशुभात् स्वप्नात् तस्याः हृदयमस्त्यनिष्टाशङ्कि । सा सततं स्वभर्तृकल्याणकाङ्क्ष्यैवात्मानं कष्टे निपात्यापि व्रतं साधयति । "अज्जउत्त, जहवि एव्वं तहवि गुरुकिदपडिण्णाभारोट्ठाणं क्खु सङ्काए"-इत्येतानि तदुक्तानि पदानि तस्या विवेकवतीत्वं प्रथयन्ति । "स्त्रीभावेऽपि वर्तमाना वरं भवती पुनर्महाराजः इत्येतत् कञ्चुकिनोदीरितं वचो युगपदेव तद्गतानेकान् गुणान् अभिव्यनक्ति।

नात्र सन्देहो भट्टनारायणेन पात्राणां चरित्र-चित्रणे प्रशंसनीयं साफल्यं संलब्धमस्ति तच्चित्रितेषु चरित्रेषु न क्वापि कृत्रिमत्वं दृश्यते। सर्वत्रैव तत्र स्वाभाविकत्वमुपलभ्यते। अत एव तु नाटकमेतच्चरित्रप्रधानेषु नाटकेषु गण्यते।

यद्यपि रूपके रसस्तृतीयतत्वेन मतस्तथापि तत्राभिनेयत्वस्य स्थानं प्रमुखम्। अतस्तत्सर्वमप्यतिशय्य सन्तिष्ठते। वेणीसंहारनाटकमभिनयदृष्ट्या न सफलं नाटकम्। न केवलं तत्राभिनयनैपुण्याः कुशलत्वमपि तु तत्र कथावस्त्वपि गतिशीलं न वीक्ष्यते। व्यापाराणां च संयोजनमपि न प्रशस्तम्। न तस्य दृश्यकाव्यत्वं निकषे शुद्धं सिध्यति। रस-परिपक्वत्वदृष्ट्या तु नाटकमिदमेकं सफलं सुन्दरं प्रभावोत्पादकं नाटकं वर्तते। नाटकेऽत्र प्रधानो रसोऽस्ति वीरः। तस्य रसस्य प्रवाहः प्रथमाङ्कादेवानवच्छिन्नया गत्या प्रवहन्ननुभूयते। स रसान्तराणाञ्च स्रोतांस्यात्मनि सन्निदधानो नाटकभूभागमाप्लावयन्नन्ते आनन्दे परिणमते।

वीरभावभावितस्य भीमस्य तु—

(क) "मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिवाम्युरस्तः।"

(ख) "मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः,
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः॥"

(ग) "अन्योन्यास्फालभिन्न-द्विपरुधिर-वसा-मांस-मस्तिष्क-पङ्के।
मग्नानां स्यन्दनानामुपरिकृत-पदन्यास-विक्रान्तपत्तौ॥"

इत्यादिकाः पुष्कला वीरोक्तयस्तु ह्लादित एव श्रुतिगता भवन्त्येव अन्येषामपि दुर्योधनाश्वत्थामप्रभृतीनां वीरपुङ्गवानामुक्तयो नितरां वीरभावमुत्साहञ्च हृदये सञ्चारयन्ति सर्वेषामपि मानवानाम्।

द्वितीयस्मिन्नङ्के पार्थस्य जयद्रथ-वधप्रतिज्ञाया भीतां जयद्रथमातरं दुःशलां सान्त्वयता दुर्योधनेन कृतं स्वचमूवर्णनं वीररसस्यातिमनोज्ञं निदर्शनमस्ति—

"कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्तदेहैः,
श्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः।
रेणुग्रस्तार्कभासां प्रचलदसिलतादन्तुराणां बलाना-
माक्रान्ता भ्रातृभिर्मे दिशि दिशि समरे कोटयः सम्पतन्ति॥

स्वपितृनिधनवृत्तं निशम्याश्वत्थाम्नो हृदयं शोक-सन्तप्तं शत्रुञ्च प्रति रुष्टं किञ्च

तद्विध्वंसनप्रेरणया प्रेरितं च जायते। तदानीं भवति तन्मानसं वीरोत्साहवत्। तदुत्साहाभिव्यञ्जना विलोक्यतामस्मिन् श्लोके :—

"पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं तत्रभवताम्।
किमद्य.श्वत्थामा तदरिरुधिरासार-विघसं
न कर्म क्रोधान्धः प्रभवति विधातुं रणमुखे॥"

अर्जुन-वृषसेनयोर्मध्ये युद्धं यद् वर्णितं तदपि वर्तते महोत्साहसञ्चारकम्। अर्जुनस्य युद्ध-कौशलं विलोक्य को न भवत्युत्साहवान्? यथा नाटके वीररसस्य परिपाकोऽवलोक्यते तथैव रौद्ररसस्यापि। भीमदुर्योधनयोः क्रोधोद्गारास्तु नाटके श्रूयन्त एव परं रौद्ररसपरिपूर्यमाणा गर्जनाश्च यतस्ततं आकर्ण्यन्ते। अश्वत्थाम्न एतस्मिन् वचने रौद्रस्य स्वादो गृह्यताम् :—

"यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥"

यद्यपि नाट्यशास्त्रीयनियमाच्च रङ्गमञ्चे युद्धदृश्यमुपस्थापयितुमस्ति शक्यं परमत्र नाटके यत्र यत्र समरक्षेत्रं वर्णितं तत्र वीभत्सरसस्य सञ्चारः सर्वथैव दृग्गोचरीभवति। दृश्यताम्—

"हदमाणुशमंशशोणिदेहिं कुम्भशहश्शं वशाहिं शञ्चिदम्।
अणिशं अ पिवामि शोणिअं वलिशशदं शमले हुवीअदु॥"

यद्यपि नाटकस्य प्रधानवीररसत्वान्नाटके वीर-रौद्र-वीभत्सरसानां प्राचुर्यमस्ति परं तत्र द्वितीयाङ्के श्रृङ्गाररसोऽपि आस्वाद्यते। भीम-निधनस्य वृत्तान्तं श्रुत्वा द्रौपदी-युधिष्ठिरयोः कृते करुणविलापे करुणरस आस्वाद्यतां याति।

"आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद् विघटिततमोग्रन्थयः सत्त्वनिष्ठाः।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम्॥"

इत्यत्र दार्शनिकी भावना किञ्च—

"दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतः शमवतो भीतं जगत् फाल्गुनात् ।
वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं वैरिषु मुञ्च तात पितरावन्धाविमौ पालय ॥"

इत्यत्र निराशाया वेदनाया आर्त्ततायाश्च कीदृशी कियती च प्रियाभिव्यक्तिः सञ्जातास्ति ।

नाटकार्थं गृहीतं कथावस्तु यद्यपि प्रकृतिवर्णनाय नावसरं प्रददाति परं कविना तदर्थमवसरमधिगन्तुमीहा कृतैवास्ति । नाटकेऽतः प्रकृतेर्मृदुलं क्रूरञ्चोभय-विधं दृश्यं चित्रयन् कविः प्राप्यते । प्रभातस्य मनोभिरामं दृश्यमीक्ष्यताम्—

"प्रालेयमिश्रमकरन्द-करालकोशैः
पुष्पैः समं निपतिता रजनी प्रबुद्धैः ।
अर्कांशुभिन्नमुकुलोदर—सान्द्रगन्ध-
संसूचितानि कमलान्यलयः पतन्ति ॥

प्रकृतेर्भीषणञ्च दृश्यं विलोक्यताम् :—

"दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृण-जटिल-चलत्-पांसुदण्डोऽन्तरिक्षे
झाङ्कारीशर्कराल: पथिषु विटपिनां स्कन्धकोषैः सधूमः ।
प्रासादानां निकुञ्जेष्वभिनव-जलदोद्गार-गम्भीर-धीर
श्चण्डारम्भः समीरो वहति परिदिशं भीरु ! किं सम्भ्रमेण ॥"

नाटके प्रधानरसानुरूपैव शैल्यपि शोभते । यादृशो रसस्तादृश्येव तत्र भाषा विभाति । यं रसं कविः प्रवाहयितुकामोऽस्ति तद्रसाविर्भावने तस्य भाषा सर्वथोपयुक्ता । भाषायां कवेरेकाधिकारः । वीररसवत्यां रचनायां गौडी रीतिः समुचिता भवति । नाटकेऽस्मिन् वीररसप्रधाने सैव रीतिः परिस्पन्दते । गम्भीर-ध्वनिमूलकपदानि परिगृह्य समासान्तानि च पदानि प्रयुज्य कविना सर्वत्र ओजोगुणस्य सृष्टिः कृतास्ति । गौडीरीतिसमुल्लसितायाः समासवत्पदसंगुम्फिताया गम्भीराया ओजोगुणविभाविताया भाषायाः सद्भावात् वीरो रौद्रश्च द्वावपि रसौ नितरां विशदौ भूत्वात्मानं समुपस्थापयितुं प्रभविष्णू सञ्जातौ स्तः । दृश्यकाव्ये एषा शैली यद्यपि न प्रिया मता परं रसपरिपाकस्तु तद्विधेनैव मार्गेण भवितु-मर्हति । अतः काव्यत्वदृष्ट्या तु औचित्यायैव कल्पते सः प्रकारः ।

नाटकेऽस्मिन् अनुप्रास-यमकादिशब्दालङ्काराणां प्रयोगस्त्वस्त्येव परम् "आश-स्त्रग्रहणात्-( २, २ )" इत्यादौ विशेषोक्ति-विभावनयोः; "विकिरधवलदीर्घात् ( २, १६ )" इत्यादौ कारकदीपकस्य, "किं नो व्याप्तदिशाम्···( २, १७ )" इत्यादावुपमारूपकयोः; "कुर्वन्त्वाप्ता हतानाम्···( ५, ३६ )" इत्यादौ सहोक्तेः सौन्दर्यमेवमेवान्येषामन्येषाञ्चालङ्काराणां नाट्यालङ्काराणां च सुषमा कविना साधु दर्शितास्ति। अलङ्कारा इव नाटके अनेकेषां छन्दसां प्रयोगो दृश्यते। तत्र शौरसेनी-मागधीप्रभृतिप्राकृतभाषाः अपि सम्यक् प्रयुक्ताः प्राप्यन्ते कथनस्य सारोऽयं नाटकमेतन्नाट्यकलादृष्ट्या यद्यपि नोत्तमं परं काव्यकलादृष्ट्योत्तममत-एव विदुषां संसारे सम्मानं लभते।

# रत्नावली

शास्त्रीयपद्धतिमाश्रित्य विरचितेषु दृश्यकाव्येषु सम्राजो हर्षवर्द्धनस्य 'रत्नावली' नाम दृश्यकाव्यमेकं श्रेष्ठं दृश्यकाव्यमस्ति। तच्छ्रेष्ठतायाः कारणमिदमस्ति यत् तत्र तेषामुदाहरणानां संख्याधिकतमा वर्तते यानि नाट्यशास्त्रं कस्यचन रूपकस्य विशिष्टतायाः प्रदर्शनाय अपेक्षते।

रत्नावली नाट्यकलादृष्ट्यैव नोत्तमा अपि तु सा दृश्यकाव्यदृष्ट्यापि एकाभिनन्दनीया कृतिर्वर्तते। नाटिकाकारेण तत्प्रणयने तदद्भुतं कौशलमभ्युपागामि येन तत्र शास्त्रीयपद्धतिविषयकं सौन्दर्यं कलात्मकञ्च मृदुलं लालित्यमुभयमपि नितरां मनोऽभिरामं भूत्वात्मानमुपस्थापयितुं क्षमे सञ्जाते स्तः। कुशलकलाकारस्य तूलिका मनःप्रीतिकरैरङ्गैः वर्णैरालेख्यस्य रूपे नैसर्गिकीमाभां किरन्ती प्राणान् प्रवाहयति। न कलाकारः शास्त्रीयान् सिद्धान्तानुपेक्षते। स तेषु रमते। ते च तस्मिन् रमन्ते। कलाकारस्यैतद्धि निखिलं वैशिष्ट्यं दृग्गोचरीभवति हर्षे; अत एव शास्त्रप्रतिपादितं सन्ध्यङ्गक्रम-विधानं स रत्नावल्यां यथाविधि संरक्षन् समवाप्यते। मुखसन्धेर्द्वादशस्वङ्गेषु करणमेकादशमङ्गं वर्तते विलोभनञ्च चतुर्थं परं रत्नावल्यां प्रथमं करणमङ्कितम् :—"नमस्ते भगवन् कुसुमायुध अमोघदर्शनो मे इदानीं त्वं भविष्यसि" इति। ततश्च तत्र विलोभनम् :—

> "अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा
> वास्थानीं समये समं नृपजनः सायन्तने सम्पतन्।
> सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
> प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते॥" इति।

अत्र विलोभनेन सहोद्भेदाभिधमपि सन्ध्यङ्गं विभाति। भवति कलाकारः स्वतन्त्रः। तत्र राजमाना स्वातन्त्र्यप्रियता वस्तुतः कलां धवलयति प्रसाधयति च ताम्। असंशयं हर्षे कलाकारत्वमन्वर्थतां याति।

अर्थप्रकृतयः, कार्यावस्थाः, सन्धयश्च सन्ति वस्तुविकासनस्य साधनानि। हर्षो रत्नावल्यां तत्-तत्-साधनानि सम्यक् प्रयुञ्जानः प्राप्यते। रत्नावल्याः

कथावस्तुनः प्रधानं ध्येयमस्ति रत्नावल्युदयनयोरुद्वाहः। कविना विष्कम्भके यौगन्धरायणस्य—

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥"

इत्येतयोक्त्या साध्यस्य बीजं स्पष्टमेव निर्दिष्टम्। एतस्मादुपरितनाच्छ्लोकात्—

"प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ दैवेनेत्थं दत्तहस्तावलम्बे।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाचारी भीत एवास्मि भर्तुः॥"

इत्येतच्छ्लोकं यावद् बीजमेवोपस्थापयति कविः। यौगन्धरायणस्यैवोक्तिरेवार-म्भावस्थां समुपन्यस्यति। बीजाभिधाया अर्थप्रकृतेः आरम्भावस्थायाश्चान्वयो विधीयते मुखसन्धिनैव। अथ च मुखसन्धावेव बीजस्योद्भव उद्देश्यानां संस्तवः फलप्रोत्साहनादिकञ्च निरूप्यन्ते। एतेषां सद्भावो रत्नावल्याः प्रथमेऽङ्के विद्यते तस्मात् तत्र मुखसन्धिरेव परिस्फुरति।

"समप्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुम्।"

इत्यादिकां वैतालीयां गिरामाकर्ण्य सागरिका "कहं अअं सो राआ उदअणो जस्स अहं तातेण दिण्णा"···इत्यादिकं यदभिदधाति तत् तन्मानसे प्रादुर्भूतं प्रेमाभि-व्यनक्ति कथाविकासने च तज्जायते साहाय्यकृत्। कविरित्थमिह अर्थप्रकृतिं बिन्दुमुपक्षिपति। सागरिकोदयनमालिखितुं यद् यतते तदेव प्रयत्नाख्या कार्या-वस्थास्ति बिन्दुप्रयत्नयोः संगतिः प्रतिमुखसन्धिमध्ये भवति। रत्नावल्यां द्वितीयाङ्के प्रतिमुखसन्धिरेवातो विद्यते। रत्नावल्या नाटिकात्वात् तत्र पताकाप्र-कर्यौः सन्निवेशो नापेक्ष्यत इत्येतद् विमृश्य न कविना ते प्रदर्शिते। ते विना शास्त्रीयतापि नापकर्षमभ्युपैति तस्मात् तदनुपस्थापनं न कामपि हानिं जनयति। तृतीयाङ्के रत्नावली (सागरिका) वेषं परिवर्त्य राजानं संगन्तुमभिसरणोपाय-मवलम्बते परं न वर्तते स उपक्रमो निरापदः। वासवदत्ता तमुपायं व्याहन्तुं शक्नोति। भवति च स उपायो व्याहतः। राजा यद्यपि तत्राकस्मादेव सागरिका-मवाप्नुते परं तदवाप्तिसमये "भो एवं पणेदं जदि अआला वादावली भविअ ण आआदि देवीवासवदत्ता" इत्येतदभिधाय विदूषको हि वासवदत्ताया आगमना-शङ्कामप्युत्पादयति इत्येतद्विधायाः स्थितेर्विद्यमानत्वात्, तृतीयाङ्कः प्राप्त्याशाभि-धावस्थां भजते। तथाविधत्वात्, तत्र गर्भसन्धिः समुपतिष्ठते। "देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामि"···इत्यादिकानि वचनानि फल-प्राप्तिं सङ्केत-

यन्ति। कविना नियताप्त्यपस्थामेव दर्शयितुं हि तद्विषयकः प्रक्रमः समुपन्यस्तः। चतुर्थेऽङ्के हि अग्निबाधां यावद् रत्नावल्याः प्राप्तिः सम्प्रत्यूहा प्रदर्शितास्ति परमन्ते तदवाप्त्यवसरो विघ्नविहीनश्च समुपस्थापितः। एतत् सर्वं चतुर्थस्याङ्कस्यावमर्श-सन्धिमत्त्वं प्रथयति। तस्मिन्नेव चतुर्थेऽङ्के सिंहलेश्वरस्य सचिवो वसुभूतिः सागरिकां निर्वर्ण्य बाभ्रव्यं "सदृशीयं राजपुत्र्या बाभ्रव्य" इति यद् व्याहरति तस्य तद्व्याहरणान्निर्वहणसन्धिः समारब्धो भवति। यौगन्धरायणकृते सर्वरहस्यो-न्मीलने रत्नावलीं परिग्रहीतुमुदयनम्प्रति वासवदत्ताविहितेऽभ्यर्थने च फलावाप्तिः स्फुटतयैव दर्शकानां समक्षेऽवतरति। अतश्चतुर्थोऽङ्कः उपसंहृतिसन्धि (युज्यते)। कथावस्तुनि चमत्कारमवतारयितुं नाटिकाकारेण पताकास्थानकानामपि प्रयो-गोऽस्ति कृतः। धनञ्जयेन अन्योक्तिरूपं पताकास्थानकमथ च समासोक्तिरूपं पताकास्थानकमित्येतद् द्वयमेव प्रतिपादितम्। कविनानयोर्द्वयोरपि सन्निवेशो विहितः स्वरचनायाम्। "यातोऽस्मि पद्मनयने" इत्यादौ अन्योक्तिरूपं पताका-स्थानकं किञ्च "उद्दामोत्कलिकां विपाण्डुररुचम्" इत्यादौ समासोक्तिरूपं पताका-स्थानकं शोभमानं पश्यन्त्येव भावुकाः। इदं सर्वं नाटिकाया अस्याः शास्त्रीयप-द्धत्यनुगामित्वं बोधयति।

नाटिकाकारः प्रस्तावनानन्तरं विष्कम्भकद्वारेण नाटिकास्थायाः कथायाः पूर्व-वर्तिनोंऽशस्याभासमात्रं प्रददाति। स च अंशोऽयम्—'सिंहलेश्वरस्य सुतां रत्नावलीं यः परिणेष्यति सः चक्रवर्तित्वमवाप्स्यति' इत्येतज्ज्योतिर्विद्भ्यो कौशाम्बीश्वरस्यो-दयनस्य मन्त्री यौगन्धरायणो रत्नावलीमुदयनार्थं सिंहलेश्वरं याचते परं सिंहलेश्वर उदयनस्य वासवदत्ताराज्ञीवत्त्वात् तस्य तां प्रार्थनां प्रत्यादिशति। ततो यौगन्ध-रायणो "लावाणके ग्रामेऽग्निना वासवदत्ताऽदह्यत"—इत्येतमनृतमुदन्तं वितत्यो-दयनस्य कृते सिंहलेश्वराद् रत्नावल्या अधिगमनेऽधिगच्छति साफल्यम्। परं दैवाद् रत्नावलीवाही पोतोऽर्णवे निमज्जति। फलकेनैकेन सांयात्रिका उद्धरन्ति रत्नावलीम्। आनीता च सा यौगन्धरायणस्य सविधे भवति। यौगन्धरायणस्तां 'सागरिके'त्येतन्नाम्ना प्रख्याप्योदयनस्यावरोधे देव्याः वासवदत्तायाः सेवायां नियुनक्ति येनोदयनः स्यादावर्जितस्तां प्रति। रत्नावलीकथेत्येतदंशानन्तर-मारब्धा भवति।

नाटिकायाः प्रथमेऽङ्के मदनमहोत्सवस्य दर्शनीयं दृश्यं समुपस्थितं भवति। सागरिका तस्मिन्नेव कमनीये सदवसरे उदयन-दर्शनस्य समवाप्तेः पुण्यप्रयों

वेलामश्नुते प्रच्छन्नायां दशायाम्। तद्धृदये प्रणय-बीजमुप्त्वा प्रथमोऽङ्को भवत्यवसितः।

द्वितीयस्मिन्नङ्के उदयन-विरहताप-तप्ता सागरिका स्वमनोविनोदनाय राजानमालिखन्ती वीक्ष्यते तत्सखी सुसंगतोदयनवियोगवह्निदह्यमानां तामुपचरन्ती समुपलभ्यते। राज्ञ उदयनस्यापि दृक्-पथे सागरिकाऽऽलिखिततच्चित्रं, यत्र सुसङ्गतया सागरिकापि आलिखितासीत्, अवतरति। चित्रं वीक्ष्य नृपः सागरिकामनुरज्यति। सुसङ्गतायाः प्रयत्नेन सागरिकोदयनयोः सान्निध्यमपि सञ्जायते। संयोगवशात् तच्चित्रं वासवदत्तादृष्टिगतं भवति। नृपः चित्रं विलोक्य वासवदत्ता कुप्येदिति विचार्य चिन्तां प्रतिपद्यते—इत्येतदाद्यखिलं प्रदर्श्य द्वितीयाङ्कोऽपि संवृत्ततामुपैति।

सागरिकोदनयोर्मेलनार्थं सुसङ्गता-विदूषकायोजितयोजनाया वासवदत्तावगतत्वात् सर्वमपि समीहितं वैयर्थ्यं याति। राजा वासवदत्तायाः पुरस्ताद् भृशं जिह्रेति। राजानुनयति तां परं न तस्या रोषो दूरीभवति। यदैषा सर्वापि स्थितिः सागरिकाश्रुतिमापद्यते तदा सात्यन्तं दूयते भवति च सा आत्मानं व्यापादयितुमुद्यता परं भगवदनुकम्पया न सा दुर्घटना भवितुं पारयति। वासवदत्ताकोप उभावपि सागरिका-विदूषकवसन्तकौ स्वशरव्यतां नयति। राज्ञो वेदनां चिन्ताञ्च वर्धयन्नङ्कस्तृतीयः समाप्तिमेति।

राज्ञी वासवदत्ता सागरिकां वन्दिनीं विधाय निगूहयति च क्वापि ताम्, अथ च प्रचारयति यत् सा उज्जयिनीं प्रस्थापिता। तदीया रत्नमाला कस्मैचन भूदेवाय देया स्यादित्येतां तत्कृतामाकाङ्क्षां ज्ञात्वापि सुसंगता तां (रत्नमालाम्) विदूषकायैव प्रयच्छति। विदूषकस्तया रत्नमालया राजानं रञ्जयितुमीहते। इतो राजानं विजयवर्मा 'रुमण्वता मन्त्रिणा कोशलेषु विजयो लब्ध' इत्येतेन शुभेन वृत्तान्तेन प्रीणयति। एतस्मिन्नेवान्तराले काञ्चनमालाऽऽहूतः कश्चन ऐन्द्रजालिकः स्वकीयेन्द्रजालविद्यायाः कौतुकं वितनोति। वासवदत्तासहितो भूपतिर्यदा तत्कौतुकजनितमानन्दं गाहमानो राजभवनमध्यास्ते स्म तदैव बाभ्रव्यो नाम कञ्चुकी यो रत्नावलीमानेतुं सिंहलद्वीपं गत आसीत् किञ्च सिंहलेश्वरस्य मन्त्री वसुभूतिर्यो रत्नावल्या साकमागच्छन् पोतस्य निमग्नत्वाज्जलधावपवाहितोऽभूत्, आगतौ। तौ विदूषकस्य ग्रीवां सागरिकाया रत्नमालयालङ्कृतां प्रेक्ष्य 'इयन्तु रत्नमाला रत्नावल्याः प्रतीयते' इति शङ्केते। वसुभूतिर्वासवदत्ता-

दहनसम्बन्धिघटनोदन्तमारभ्य जलयान-निमग्नता-रत्नावलीप्लावनादिविषयकं-सकल-मपि व्यतिकरं श्रावयति राजानम्। राजापि यदा तत् सर्वं शृण्वन्नासीत् तदैवान्तः-पुरेऽग्निज्वालाः प्रसरन्त्यो दृष्टा भवन्ति। विलोक्याग्निना दह्यमानमन्तःपुरं वासवदत्ता भीता भवन्ती तत्र वन्दिनीत्वेन स्थितां सागरिकामग्नेः त्रातुं सोद्वेगं नृपं प्रार्थयते। राजाऽपि तत्क्षणं सागरिकाजीवनरक्षार्थमग्नावेव प्रविशति। वासवदत्ता-विदूषक-बाभ्रव्य-वसुभूतयश्च महीपमनुधावन्ति। परं सागरिकोद्धारेणैव सह अग्निरपि शाम्यत्यकस्मात्। वस्तुतः सः अग्निरैन्द्रजालिककौतुकमेवासीत्। नासीत् परमार्थतोऽग्निः। वसुभूति-बाभ्रव्यौ 'सा सागरिका तु तत्त्वतो रत्नावल्ये-वे'ति विज्ञाय नितरां प्रीयेते। तस्मिन्नेवानेहसि यौगन्धरायणः सर्वमपि रहस्यमुन्मीलयति। राजा सर्वमपि तन्निशम्य विस्मयं हर्षञ्च विन्दति। वासवदत्तायाः कृतेन सविनयेनानुरोधेन च नृपो रत्नावलीं पत्नीत्वेन परिगृह्णीते—इत्येतत् सर्वमपि वस्तुजातं निधाय भरतवाक्येन सह नाटिका भवत्युपसंहृता।

निःसंशयं नाटिकायां कथावस्तु नितान्तं सुघटितं सत् युक्तियुक्तया रीत्या विकासमभ्युपैति। नाटिकाकारेण हर्षेण स्वकीयया निशितया प्रतिभया मनोभिरामया च कल्पनया तासां ललितललिततराणां घटनानां योजनास्ति विहिता याः नैसर्गिकतां चमत्कारितां च परिष्वजमानाः कथायां कामपि रुचिरां तूर्णां गतिं सञ्चारयन्ति। सारिकया सागरिका-सुसंगतयोरालापस्य पुनरावर्तनं यत् कविना कारितं तेन च उदयनस्य स्वान्ते सागरिकापरकप्रेमा-विर्भावनस्य या प्रभावपेशला कान्तभावनोद्भाविता तत् पुनरावर्तनं सा च भावना भव्या नाटिकामतित्वरां गतिमतीं विदधाते। एवमेव नाटिकायां सागरिकाभिसारसम्बन्धिनी किञ्च तदभिसरणोच्छेदविषयिका च या घटना समुल्ल-सति ते द्वे अपि घटने हर्षस्य हृद्यायाः कल्पनायाः परममञ्जुलनिदर्शनत्वेन विभासेते। ऐन्द्रजालिकयुद्भावना तु आनन्दपूर्णमद्भुतं वातावरणं सृजन्ती अनिर्वचनीयायामुल्लासवत्यां भासुरायां भूमिकायां नाटिकां संवृणुते।

अस्मिन् नाटिकाया नायक उदयनो धीरललितनायकः। तस्य चरित्रे विला-सिता, प्रेमपरता, कलाप्रियता, प्रणयपरायणता च दृश्यन्ते। प्रकृत्यास्ति स शिष्टः सुकोमलश्च। परिजनेषु च तस्य सहृदयभावो विद्यते। यद्यपि नाटिकानियमपा-रतन्त्र्यान्नाटिकाकारेणोदयनस्य विलाससुलसितं प्रणयप्रवणमेव रूपं प्राधान्येन प्रदर्शितं परं सापि घटना नाटिकायां कविना सङ्केतितास्ति यया तस्य राजनी-

तिनिष्णातत्वं विलक्षणं च शौर्य्यमवगतं जायते। इदमपि सम्यग् विदितं भवति यत् सः प्रणयलीलानां मधुरमधुरतरासु वेलासु विरहवेदनावस्तु क्षणेषु च न राजकार्येभ्यो भवत्युदासीनः। विजयवर्मणः कोशलविजयवृत्तान्तमाकर्ण्य सः रुमण्वन्तम्प्रति स्वकीयहार्दिकधन्यवादान् सहर्षं व्याहरन् कोशलनरेशस्य च शूरतां श्लाघते—"साधु कोशलपते साधु, मृत्युरपि ते श्लाघनीयो यस्य शत्रवोऽप्येवं पुरुषकारं वर्णयन्ति" इति। तदाज्ञामन्तरेण सागरिकाऽऽनयनाध्यवसायाद् यौगन्धरायणस्य शङ्कितहृदयता किञ्च 'कथमसौ मामनिवेद्य किञ्चित् करिष्यती'त्येतत् तद्वचस्तदीयं राजनीतिम्प्रति सततं जागरूकत्वमभिव्यनक्ति।

वसन्तकविदूषकस्य च चरित्रचित्रणे कविना श्लाघ्या सफलताधिगम्यते। तेन तेन पाटवेन तस्य चरित्रमालिखितं येन विदूषकापेक्षिताः सर्वेऽपि गुणाः लोचनगोचरतां गच्छेयुः। नर्मसाचिव्यपटुत्वरहस्य-रक्षणकुशलत्व—मनोविनोदनविचक्षणत्व—सुख—दुःखसहचरत्व—हास्यप्रवीणत्वादिसद्गुणाः कुशलेन कलाकारेण यथोचितेषु स्थलेषु अस्मत्समक्षे निधीयन्ते। राज्ञि विदूषकस्य प्रगाढभक्तिरास्मीयता च वर्तेते। स नृपमानसप्रसादनाय वासवदत्ताप्रदत्तं निग्रहं ससुखं सहते; अनल—प्रविष्टे सति भूपतौ सोऽपि तमनुद्रवति। "भोदि सच्चं सच्चम्। सवामि बम्हसुत्तेण जइ ईदिशो कदावि अम्हेहि दिट्ठपुव्वा"; किञ्च "सहत्थदिण्णेहिं मोदएहिं चिरस्स दाव कालस्स उदरं मे सुपूरिदं किदम्"; अथच "भो वअस्स ण एदे महुअरा णेउरसद्दं अणुहरन्ति। णेउरसद्दोज्जेव एसो देवीर परिअणस्स···" इत्यादिकतदुदीरितवाक्येभ्यस्तस्योपरिभणितानामनेकेषां गुणानां संस्तवः स्फुटतया समवाप्यते। 'द्विपदीखण्डं' स 'चर्चरी' इति निगद्य तु स्वविदूषकत्वं नितरामेव विवस्त्रं विधाय समुपन्यस्यति।

रत्नावल्यां मुग्धात्वं विभाति। उदयनप्रथमसाक्षात्कारकाले सञ्जाता तद्दशा तस्या मुग्धतां व्यनक्ति—"एदं पेक्खिअ अतिसद्धसेण ण सक्कणोमि पदादो पदं विगन्तुम्"। तस्यामनिन्द्यं पुनीतमेव सौन्दर्य्यं समुत्तरलदवलोक्यते। नृपोदयनस्य दृक्पथे न सावतरेदित्येतदर्थमध्यवसितः प्रयत्नोऽपि तस्या अनुपमसुन्दरतां प्रकटीकरोति। राज्ञः—

> "दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विषश्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम्॥

शिरांसि चलितानि विस्मयवशाद् ध्रुवं चेतसा
विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥"

इत्येषा तामधिकृत्योक्तिरपि तस्या अलौकिकसौन्दर्यवत्त्वं वेदयति। अस्ति सा कलापारंगता सुन्दरी। चित्रकलायां सा नैपुण्यविशेषं निदधाति। तच्चित्रकलां प्रशंसति पुनः पुनस्तत्सखी सुसंगता। राजा तदालिखितचित्रं विलोक्य तस्यामनुरक्तः सञ्जायते। परिस्थितिवशात् सा भवन्त्यपि राजतनया दासीवोदयनान्तःपुरेऽहानि गमयति एतद्धेतोस्तस्या मनो न जातु ग्लानिर्मुञ्चति। तां दशां नीतापि सा स्वपितृकुलमर्यादारक्षायामस्ति सावधाना। वंशं पृष्टा सा सुसंगतया बाष्पार्द्रनयना भवति। तूष्णीं भूत्वैव सा स्वव्यथां वंशस्योदग्रतां च युगपदेव प्रकटीकुरुते। तादृशं तज्जीवनं न तस्यै रोचते क्षणमपि, परमुदयनगतं प्रेम जीवनं धारयितुं तां सनिर्बन्धमनुरुणद्धि। शंसति च सा—"ता परप्पेसणदूसिदंपि मे जीविदं एदस्स दंसणेण दाणिं बहुमतं संवुत्तम्"। नैजान्वयाभिमानशालिन्यां तस्यामात्म-सम्मानभावना बलीयसी भूत्वा संस्फुरति। सा अपमानं सहमाना न स्वजीवनं वोढुकामा। तदभिसरणरहस्ये सति ज्ञाते वासवदत्तया सा अपमानाद् वरं मृत्युरिति विमृश्य लतापाशेनात्मानं जिघांसते। न तस्याः प्रेम औचित्यमतिक्रमते। सुसंगता तत्प्रेमैवमभिनन्दति—"न कमलाकरं वर्जयित्वा राजहंस्यन्यत्राभिरमते"।

अस्ति वासवदत्ता राज्ञ उदयनस्य प्रधानमहिषी। तत्स्पृहणीयप्रेमहेतोः राजोदयनः सर्वथा तदधीन एव। न कोऽपि क्षण एतादृक् यस्मिन् सा राज्ञः प्रेम-पारावारे न निलीना प्राप्येत। तज्जीवनमेव तज्जीवनं तदानुकूल्यमेव तच्छ्वासस्तस्माद् राजा न कदापि तस्यां प्रमाद्यति। अत्र—

"प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ।
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति॥"

इत्येतदादिकं नृप-वचः प्रमाणम्। वासवदत्तायाः परमोदारहृदयता तस्याः सदयमनस्कता च तदातितरामेव स्फुटतया प्रकाशमुपैति यदा राजप्रासादमग्निगृहीतं प्राप्य सा तत्क्षणं वन्दिनीत्वं नीतां सागरिकामग्नेः पातुमवनीन्द्रं प्रार्थयते—"एसा क्खु मए णिग्घिणाए इध निअडेण संजमिदा साअरिआ विवज्जदि। ता तं परित्ताअदु अज्जउत्तो"। परिजनेषु तस्या दाक्षिण्यं सदैवावलोकितं भवति। विदूषकं निगृह्णन्त्यपि सा सम्मानपुरस्सरं मोचयति।

नारीपात्रेषु सुसंगताया अपि चरित्रमनुकरणीयम्। सास्ति सागरिकायाः सखी। सख्युः सखित्वं सखि-सुख-दुःखसहचरत्वमधिवसति। सख्यां सुसंगतायां स गुणः संशोभते। विरहतापसन्तप्तायां सख्यां सागरिकायां, सा तां परमस्नेहेन परिचरन्ती प्राप्यते। सापि चित्रकलायां दक्षत्वं निदधाति। सागरिकाऽऽलिखितोदयनचित्रफलके सा निर्विलम्बं सागरिकामपि तत्राऽऽलिख्य चित्रं कामपि प्रशंसनीयां शोभां प्रापयति। तस्याः वाक्पटुत्वं तदा सम्यग् विदितं भवति यदा सा उदयनेन सह संलपति। सा स्वसख्याः सागरिकाया हिताय तत्सर्वमप्यनुष्ठातुमुद्यतते यद् विदूषकः प्रस्तवीति। वस्तुतः सास्ति आदर्शसखी।

नाट्यशास्त्रस्य विधानमिदं यन्नाटिकायां नायको धीरललितआलिख्येत। तत्र प्रणय-लीलाः प्रदर्श्येरन्। एतद्विधानान्नाटिकायां प्राधान्यं शृङ्गारस्य भवति। रत्नावल्यामतएव हर्षेण तत्सर्वमनुसृतं यन्नाट्यशास्त्रमादिशति। प्रथमाङ्के कविर्वसन्तोत्सवस्य कन्दर्पस्यार्चायाश्च प्रियं दृश्यं शृङ्गाररसानुगुणवातावरणप्रतिष्ठापनपूर्वकमारचयति। वासवदत्तोदयनयोः स्पृहणीयं प्रेम तु तस्मिन् रमणीयोपक्रमे जीवनमेव सञ्चारयति। कविर्नाटिकां सागरिकायाः उदयनस्य च प्रणयावनेरुपरि प्रतिष्ठापयति। तत्र शृङ्गारस्य संयोग-विप्रलम्भाभिधौ द्वावपि पक्षौ साफल्यपूर्वकं चित्रितौ दृश्येते। प्रेमोदयो गुण-श्रवण-चित्रदर्शनादिना जायते-इत्येतत्कारणात् तत्सर्वमपि नाटिकायां कुशलः कलाकारः समीचीनतया निबध्नाति। शृङ्गारे हावस्यास्ति नैजं महत्त्वम्। नायकं परकीयाया वा अभिसारिकाया हावा भृशं प्रीणन्ति। परमेतस्यां नाटिकायामभिसरणस्य प्रत्यक्षतयोपस्थापितत्वात् हावा नात्मानमभिनेयतायां परिणमयितुं क्षमन्ते। तथात्वेऽपि उदयनस्यानयोक्त्यावश्यं ते आस्वादविषयं नीताः सन्ति—

"प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ।
वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
रमयतितरां सङ्केतस्था तथापि हि कामिनी॥"

सन्तीमाश्चेष्टाः परकीयायाः हावान्तर्गता एव। प्रियतम-सान्निध्येन सङ्कटक्षणा अपि भवन्त्यानन्दप्रदाः। परकीयायाः प्रेमणि तु सङ्कटकालः प्रेमपरस्य कृते वरदानमिव सम्पद्यते। रत्नावल्यामेवंविधस्याप्यनेहसो योजना कृतास्ति। अन्तःपुरे सत्यग्निगृहीते यदोदयनः सागरिकामग्नेरुद्धर्तुं याति तदा तत्स्पर्श-

सुखमनुभवन् वक्ति—( कण्ठे गृहीत्वा निमीलिताक्षः स्पर्शसुखं नाटयन् ) "अहो क्षणं मेऽपगतोऽयं सन्तापः। प्रिये, समाश्वसिहि, समाश्वसिहि";

"व्यक्तं लग्नोऽपि भवतीं न दहत्येव पावकः।
यतः सन्तापमेवायं स्पर्शस्ते हरति प्रिये॥"

तदेवं संयोगशृङ्गारस्य परिपाकः साधुसफलतया चोपपादितः। सागरिकोदयनयोः प्रेम विप्रलम्भशृङ्गारे पूर्वानुरागत्वेन समुपतिष्ठते। वियोगाग्निप्रज्वालितायाः सागरिकाया वचांसि वक्ष्यमाणानि तन्मानसवेदनामुन्मीलयन्ति—"कहं अ अदिनिसंस जम्मदो पहुदि सह संवड्ढिदं इमं जणं परिच्चइअ खणमेत्त-दंसण-परिचिदं जणं अणुगच्छन्तो ण लज्जसि......" सागरिकाया वचस्येतस्मिन् उद्वेग-प्रलापोन्मादव्याधिप्रभृतिविरहदशा व्यज्यन्ते। उदयनस्यापि विरहदशाचित्रणं कविना कुशलतया कृतम्—

"बाणाः पञ्च मनोभवस्य दियतास्तेषामसंख्यो जनः
प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम्।
दृष्टं तत् त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं
विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम्॥"

विरहे प्रियजनस्य वस्तु नितरां प्रेमोपासनपरस्य मानसं धिनोति—इत्येतत् तथ्यं च नाटिकेयमुपायनीकरोति :—

"कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयाऽनया।
तुल्यावस्था सखीवेयं तनुराश्वास्यते मम॥"

तदेवं पक्षद्वयमपि परिपाकं गलितमिह।

एतस्यां नाटिकायां शृङ्गाररसास्वाद्योऽस्त्येव सर्वत्र परमन्येऽपि रसाअनेके तत्र तत्रास्वाद्यन्ते रसिकजनैः। सहृदयजगत्—

"अस्त्रव्यस्तशिरस्त्रशस्त्रकृपणैः कृत्तोत्तमाङ्गे क्षणं
व्यूढासृक्सरिति स्वनत्प्रहरणे वर्मोद्गमद्वह्निनि।
आहूयाजिमुखे स कोसलपतिर्भग्ने प्रधाने बले
ह्येकेनैव रुमण्वता शरशतैर्मत्तद्विपस्थो हतः॥"

इत्येतस्मिन् श्लोके वीररसमास्वादयति। तत्र चास्यां नाटिकायां भयानकरस-आस्वाद्यतां याति यत्र कपिरुन्मुक्तो भूत्वा सर्वत्र सम्भ्रमं वितनुते किञ्च यदग्निः प्रासादे प्रसरति। तत्र करुणरसो रसिकान् परिप्रीणयन्नुदेति यत्र वसुभूतितो

रत्नावल्याः सागरे निमग्नत्वं निशम्य मृदुलमानसा वासवदत्ता रोदितुमारभते। ऐन्द्रजालिकदर्शिते चमत्कारपूर्णे कौतुके कविनाद्भुतरसो विनिबद्धः। इत्थमस्यां नाटिकायां सत्यपि प्रधाने श्रृङ्गारे रसान्तराणामपि सफलाभिव्यञ्जना कविना कृतास्ति।

हर्षः प्रकृतिप्रेमी प्रतीयते। अतएव तु तेनान्तःपुर-प्रेमलीलां वर्णयतापि प्रकृतिवर्णनार्थमवसरोऽन्ततोगत्वा मार्गित एव। तेन प्रकृतिर्द्विविधत्वेन वर्ण्यते उद्दीपकत्वेनालङ्कारमार्गेण च। अधस्तने श्लोके प्रकृतेरुद्दीपकं रूपमन्तर्भावितम्—

"उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदं व्याहारलीलाभृतः।
घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहु-
र्भ्रान्तिं प्राप्य मधुप्रसंगमधुना मत्ता इवामी द्रुमाः॥"

सम्प्रत्यलङ्कारमुखेन प्रकृतेः श्रीर्निभालनीया—

"देवि त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम्।
श्रुत्वा त्वत्परिवारवारवनितागीतानि भृङ्गाङ्गना
लीयन्ते कुसुमान्तरेषु शनकैः सञ्जातलज्जा इव॥"

कविः सूक्ष्मतयापि प्रकृतेर्निरीक्षणे पटीयान्। तदीयमिमं गुणं प्रस्तौति श्लोकोऽयम्:—

"पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं
क्रमात् क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति।
उपेतः पीनत्वं तदनु भुवनस्येक्षणफलं
तमःसंघातोऽयं हरति हरकण्ठद्युतिहरः॥"

नाटिकाया भाषा सरला अप्रतिहतप्रभावा सुललिता च वर्तते। न तत्र दुरूहाणि पदानि सन्ति; न च समासबहुलता। सर्वथैव सा रसानुरूपास्ति। वाक्यानि न सन्ति तत्र दीर्घदीर्घतराणि। "कष्टोऽयं खलु भृत्यभावः"; "मनश्चलं प्रकृत्यैव" इत्यादिसूक्तिभिः समुल्लसति सा सूक्तिसत्त्वात् तत्रार्थे गम्भीरतापि समागतास्ति। तत्रत्यः प्रसादो माधुर्यं च कालिदासं स्मारयति। नास्ति कवेः शैली भवभूति-

भट्टनारायणयोः शैलीव कृत्रिमा । तस्य शैल्या विशिष्टतेयं यत् तत्र चित्रात्मकानां ध्वन्यात्मकानाञ्च पदानां प्रयोगोऽभ्युपगतः । मधुरभावनाभिव्यक्त्यर्थं वैदर्भी ह्यपेक्ष्यते । कविना सापि स्वकृतावङ्गीकृतास्ति । कवेर्भाषाया वैशिष्ट्यमेतदपि वर्तते यत् तत्रालङ्काराः स्वाभाविकतयैव समागताः सन्ति । तत्रोपमोत्प्रेक्षाप्रतीपातिशयोक्तिविभावना-समासोक्त्यादीनामलङ्काराणां भृशं सचेतसां चेतो हरति । शब्दालङ्कारेषु श्लेषोऽपि कवये रोचते । नाटिकायां नाट्यकलायाः काव्य-कलायाश्चोभयोर्मञ्जुलतया समन्वयः सञ्जातोऽस्ति तस्माद्रत्नावली सर्वथैवैकान्यतमा सफला कृतिरिति शम् ।

## शूद्रकस्तस्य मृच्छकटिकश्च

संस्कृतसाहित्ये शूद्रकस्य यशः सर्वत्र प्रसृतं प्राप्यते। सोमदेवस्य कथासरित्सागरे[1], दण्डिनो दशकुमारचरिते, बाणस्य हर्षचरिते, कादम्बर्यां[2] च, शिवदासस्य वेतालपञ्चविंशतिकायां, कल्हणस्य राजतरङ्गिण्यां, स्कन्दपुराणे[3] च व्यासस्य, मेधाविनोऽस्य वेदविदांवरस्य सिंहोरुसत्त्वस्य नृपस्य नाम सादरं कीर्त्यते। अन्ये[4] चानेके स्वस्वरचनासु अनवद्यं चरितं चरित्रं च चारुतयास्य चित्रयन्तः प्रेक्ष्यन्ते। मृच्छकटिकस्य आमुखे चास्य प्रशस्तिमीक्षामहे वयम्। भूयसां विदुषां गीतामेतदीयां प्रशस्ततामधीत्य चेतः सम्प्रसभमिमं प्रत्ययं प्रयाति यन्नूनमसौ मेदिन्यां प्रथितकीर्तिरद्भुतशक्ति-मति-सम्पन्नो विचक्षणमूर्धन्यो विशांपतिष्वग्रणीर्बभूव। सत्यामपि तदीयायां सत्तायां विवादास्पदीभूतायामनासादितस्फुटेतिहासप्रमाणायां, तस्य बुधबहुलपरिणूतत्वात् नर्तितलोकरसनापुण्यश्लोकत्वाच्च सोऽवश्यमेव कस्मिन्नपि सौभाग्यवत्यनेहसि भुवनमिदं स्वगरिम्णामुन्नमयाम्बभूवेति निश्चीयते।

एतावत्कालपर्यन्तमपि निश्चयपूर्वकमेतन्नाभिधातुं पार्यते यच्छूद्रकः क आसीत् कस्मिंश्च काले इमां भारतवसुन्धरां गौरवगिरेरुद्ग्रतरे शृङ्गे समारोपयामास। विद्वद्धौरेयः श्रीचन्द्रबली[5] पाण्डेय आह यद् वासिष्ठीपुत्रः पुलुमाविरेव

---

[1] तस्माच्च शूद्रकाख्योऽभूद् भूपतिः प्राज्यविक्रमः।

( कथासरित्सागरे ११शे तरङ्गे, पृ० ४१४ )

[2] 'राजा शूद्रको नाम' ( कादम्बर्याम्, पृ० ९, नि० प्रे० )

[3] स्कन्दपुराणे, कुमारिकाखण्डे।

( शूद्रकः कलिवर्षेषु ३२९० वर्षेष्वतीतेषु सम्बभूव )

[4] ( अ ) राजशेखर-सङ्केतित-रामिल-सौमिलकृता शूद्रककथा।

( आ ) भोजकीर्तितनामधेया पञ्चशिखप्रणीता प्राकृतकाव्यरूपा शूद्रककथा।

( इ ) भोजेनाभिनवगुप्तेन चानुस्मृतं विक्रान्तशूद्रकं नाम नाटकम्।

( ई ) काव्यादर्शटीकायां वादिवधेनोल्लिखितं शूद्रक-चरितम्।

[5] श्रीचन्द्रबली पाण्डेयः शूद्रक, पृ० ३८।

शूद्रक आसीत्। डॉ० स्मिथ[1] आन्ध्रवंशसम्भवं सिमुकमेव शूद्रकं निर्धारयति। प्रो० स्टेनकोनो कथते यत् २४८तमे खैस्ताब्दे सम्भूतः शिवदत्ताख्यः क्षितीश एव शूद्रक आसीत्। दशकुमारचरितरचयिता दण्डी एव शूद्रक इति [2]श्रीपिशेलोऽनुमिमीते। काश्चन हस्तलिपय[3]स्तु वदन्ति यच्छालिवाहननृपतेर्मन्त्री एव शूद्रक इत्येतां संज्ञां जुजुषे। स एव, गच्छतानेहसा, प्रतिष्ठानस्य नृपतिर्जज्ञे। इत्थं शूद्रकीयव्यक्तित्वमधिकृत्य महान् विवादः श्रूयते यथा, तथैव तस्य समयमुद्दिश्यापि सन्ति नैका ऊहाः।

कविः कल्हणः शूद्रकं विक्रमादित्यात् प्राग्भवमवगच्छति, परं कल्हणाऽभिमतः कतमोऽयं विक्रमादित्य इति न स्पष्टम्। चेदयं स विक्रमादित्यो यो डॉ० राजबलीपाण्डेयकृतानुसन्धानानुसारं कालिदासकवेराश्रयदाता मालवगणप्रमुखो विक्रमसंवत्सरप्रवर्तकस्तदा शूद्रक ईशवीयाब्दप्रवर्तनकालात् प्राग्वर्ती सिद्ध्यति। यदि डॉ०स्मिथ-विचारोपरि ध्यानं प्रदीयते तदैतदभ्युपगमनमुचितं प्रतिभाति यदसावीशवीयाब्दात् प्राग् गामिन्यां तृतीयस्यां शताब्द्यां समभवत्। मार्समेनाख्यप्रतीच्यपण्डितप्रणीतभारतेतिहासानुसारं मगधशासकः शिवरुक्नामा राजमन्त्री १९१तमेशवीयेऽब्दे शूद्रकेण व्यापादित इत्येतेन शूद्रक ईशवीयद्वितीयशतकवर्ती बभूवेति ज्ञायते। डॉ० फ्लीटो विमृशयति यच्छूद्रकसूनुरीश्वरसेन आन्ध्रान् पराभूय २४८–४९तमेशवीयाब्दे चेदिसंवत्सरं प्रावीवृतत्-इत्येतेन-तदीया विद्यमानता तृतीयशतकयायिनी निष्पद्यते। स्कन्दपुराणोक्तौ यदि श्रद्धा निधीयते तदा सः सहस्रैकतमेशवीयाब्दादूर्ध्ववर्त्येव तर्कितो जायते यतो हि पुराणानां[4] रचनोपरिनिर्दिष्टेशवीयं शतकं यावदेव समपद्यते। अवन्तिसुन्दरीकथायां वर्णितस्य शिवस्वातिमहीपस्य समयेऽयमजनीति केषाञ्चन कोविदानां मतमित्थमेष एकाशीतितमे खैस्ताब्दाभ्यर्णेऽजनिष्टेति प्रमाणीभवति। (परं पुराणोक्ततिथिमाधृत्य तु शिवस्वातेः कालः खैस्ताब्दप्राग्वर्तिनि चतुर्थे पञ्चमे वा शतके निर्णीयते) श्रीजैकोवीमहाभागस्तु प्राह यत् सः खैस्तचतुर्थशतकात्र प्राक्तनः।

---

[1] स्टेनोकोनो : इण्डियन ड्रामा पृ० ५७।

[2] ए० ए० मेकडानलः, ए हिस्ट्री ऑफ सं० लि० पृ० ३६१।

[3] हिन्दी विश्वभारती, पृ० २८९९।

[4] दी हिस्ट्री एण्ड कल्चर ऑफ दी इण्डियन पीपुल; सं० ३, परि० १५, पृ० २९८।

मृच्छकटिकस्य सामाजिक्याः स्थितेरुपरि दृष्टिं निदधानो डॉ० भोलाशङ्करव्यास आचष्टे[1] यत् तथाविधावस्था भारते गुप्तशासनानन्तरं संवृत्ता। तस्मान्मृच्छकटिककारः शूद्रक ईशवीयस्य पञ्चमस्य शतकस्योत्तरार्द्धे वा षष्ठस्य शतकस्य प्रारम्भेऽभूदिति। श्रीमताम् एम० ए० महन्दाले-महाभागानां लेखेऽयं विचारः प्रकटीकृतो यत् सामान्यतस्तदीया स्थितिः कालिदासात् पूर्ववर्तिनीति।[2]

शूद्रको मृच्छकटिके नवमेऽङ्के[3] बृहस्पतेर्मङ्गलविरोधित्वमदीदृशत् परं वराहमिहिरेणानयोर्ग्रहयोर्मित्रत्वं प्रतिपादितम्। बृहज्जातकादवगम्यते यत् तादृशी भावना वराहमिहिरात् पूर्वमवर्तत। एषा विवृतिः शूद्रकस्य वराहमिहिरात् पूर्ववर्तित्वमभिव्यनक्ति। वराहमिहिरो गुप्तकाले[4] सञ्जातः। तेनेदमेवायातं यच्छूद्रको गुप्तशासनोदयात् प्रागेवेशवीये द्वितीये किं वा तृतीयस्मिञ्छतके प्रादुर्बभूव। आचार्यबलदेवोपाध्यायस्य[5] विचारोऽयं यत् तस्य स्थितिरीशवीयात् पञ्चमाच्छतकान्न कदापि पश्चाद्वर्तिनीति।

मृच्छकटिके वर्णितां सामाजिकावस्थामधीत्य, तत्र प्रयुक्ता विविधाः प्राकृतभाषाः शौरसेनी-मागधी-शाकारी-चाण्डाली-प्राच्यावन्तिकादिकाः-अवलोक्य, तत्र च समागतानि 'णाणक-प्रावारक-कार्षापण-सुवर्णादीनि' पदानि समवाप्य, वसन्तसेनाया भवनविशिष्टताम्, अधिकरणस्थितिं, चारुदत्तस्य सार्थवाहकतादिकं च सम्प्रेक्ष्य शूद्रकस्य वा मृच्छकटिकस्य पुरातनतरता निःसन्दिग्धतया सिद्ध्यति। गुप्तकालात् प्राक् किञ्च मौर्य्यसाम्राज्यपतनानन्तरं भारतस्य राजनीतिकी स्थितिर्न[6] तोषावहाघटतेत्यत्र भारतीयेतिहासः साक्षी। प्रायेण २५०वर्षाणि यावदत्र राजशक्तिः श्लथेव व्यालोक्यत। शासनानां बाहुल्येन, केन्द्रीयशक्तेरभावाद् वा क्षीणत्वात् सर्वत्र स्वाच्छन्द्यमेव प्रासरत्। मृच्छकटिके एवंविधायाः स्थितेः

---

[1] संस्कृतकविदर्शन; पृ० २८४।

[2] दी हिस्ट्री एण्ड कल्चर ऑफ दी इण्डियन पीपुल, खं० २, परि० १६, पृ० २६४।

[3] 'अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पतेः'। ( मृच्छ०, ९, ३३ )

[4] दी हिस्ट्री एण्ड कल्चर ऑफ दी इण्डियन पीपुल, खं० ३, परि० १५, पृ० ३२१।

[5] संस्कृतसुकविसमीक्षा, पृ० १५९।

[6] लूनिया : भारतीयसभ्यता तथा संस्कृति का विकास, पृ० २०५।

स्पष्टमेव दर्शनमाप्यते । अतो विश्वासोऽयं भवति यत् शूद्रकः सातवाहनयुगे—ईशवीयद्वितीयशतकस्याहोस्वित् तृतीयस्यान्तराले सम्बभूव ।

मृच्छकटिकस्य कर्तृकत्वमधिकृत्यापि तर्काः श्रूयन्तेऽनेके । विदुषां मध्ये बहवो मृच्छकटिकं शूद्रककर्तृकमभ्युपपत्तुं नोद्युक्ता दृश्यन्ते । श्री डॉ० पिशेलो[1] नाम प्रधीः मृच्छकटिकस्य कर्ता दण्डीति मन्यते । श्री डॉ० सिलवां लेवी[2] च मृच्छकटिकं न शूद्रकस्य कृतिं मनुते । तन्मतेन कश्चिदन्य एव कविः शूद्रकनाम्ना तत्प्रकरणं प्रथयामास । श्री डॉ० कीथोऽपि[3] मृच्छकटिकं शूद्रक-प्रणीतं नावग-च्छति । तद्विचारानुसारं कश्चित् कविर्भासकृते चारुदत्तनाटके आर्यकविद्रोहकथां समावेश्य वित्वर्ध्य च तन्मृच्छकटिकनाम्ना ख्यापयामास । तदेवं मृच्छकटिकस्य कर्तरि नानाविवादाः श्रूयन्ते ।

यत्तु पूर्वमुक्तं सिमुकः शूद्रको, वा शिवदत्तः शूद्रको, वा पुलुमावी शूद्रक इत्यादि-तद् यदि सत्यत्वेन सम्भाव्यमस्ति तदा लोकवादः-परम्परातः समागता जनश्रुतिः अपि—अवितथो भवितुं शक्यः । पौराणिकमाख्यानमपि कमप्याधारमे-वादाय समुत्थितं प्रचलितं च जायते । परकीयसाहित्यासहिष्णवः साहित्यं संहर्तुं शक्नुवन्ति यद् वा कश्चिज्जनः कस्याञ्चन साहित्यसामग्र्यामन्यत् किमपि अयथार्थं तत्त्वं प्रभवत्यन्तर्भावयितुं परं कोऽपि कस्यचन देशस्य जनताया मध्ये प्रचलितां दन्तकथां ध्वंसयितुं समूलं न कदापि शक्नोति-इत्येतस्मात् कारणादथ च धरेयं विशाला कालश्चानन्तस्तस्मात् कस्मिन्नपि काले क्वापि विपुलविद्या-गुण-बल-भाजः समरव्यसनिनो वेदविद्वरेण्यस्य तपोधनस्य शूद्रकस्य भूपतेः समुत्पत्ति-रपि सम्भवा । तेषु तेषु ग्रन्थेषु तस्य चर्चा या कृतावाप्यते न सा सर्वथैवालीकैव सम्भवा। परमेतेनेदं न वेद्यं यद् ये सज्जनास्तत्र तत्र जने शूद्रकत्वं तर्कयन्ति तेषां तर्कणं प्रत्याख्यायते । भारतीयं पुरातनतरं यत् साहित्यमिदानीमुपलभ्यते तत्र मूलं कालप्रभावात् प्रबलात् स्वकीये शुद्धे रूपेऽवस्थितं सदात्मानं स्थापयितुं न शशाक; अतो निश्चप्रचतया किमपि द्रढीयः प्रमाणमन्तरेण न वक्तुं शक्यते । तस्मान्मृच्छकटिकस्य कर्ता शूद्रक एव प्रतीयते । यदा हि वामनाचार्यो नैजकाव्या-

---

[1] मेकडानल : ए हिस्ट्री ऑफ संस्कृत लि० पृ० ३६१ ।

[2] लीथियेटर इण्डियन, १८९०, पेरिस ।

[3] डॉ० कीथ : संस्कृतड्रामा, पृ० १२८–१२९ ।

लङ्कारवृत्तौ मृच्छकटिकस्य श्लोकद्वयमुद्धृत्य शूद्रकमेवोक्तस्य रूपकस्य प्रणेतृत्वेनाङ्गीकरोति; यदा हि—

"शूद्रकेणासकृज्जित्वा स्वेच्छया खड्गधारया ।
जगद् भूयोऽप्यवष्टब्धं वाचा स्वचरितार्थया ॥"

इत्येतेन श्लोकेन दण्डी शूद्रकमुपवीणयन् प्राप्यते तदा सम्भावनैषा दृढत्वमुपैति यच्छूद्रक इत्येतन्नामधारयिता व्यक्तिविशेषोऽवश्यमभूत्। स मृच्छकटिकं नाम रूपकं चारुदत्तं नाम भासकृतं रूपकमाश्रित्य आर्यक-पालकादिवृत्तेन संवर्ध्य प्राणैषीत्। चारुदत्तस्य चरित्रं सम्भवतः शूद्रकमतितरामप्रीणादतः स तस्य कलेवरं संवर्धयामास किञ्च चारुदत्तस्योदारं पावनं महनीयं च चरित्रमुद्गीयास्मानं च समतूतुपत्।

काव्य-प्रतिभाया दृष्टया कामं शूद्रक उच्चतरेषु कविषु नान्तर्भूतो भवेत् परं तत्र काव्य-प्रतिभावश्यमेव विललास। अन्यथा तत्तत्स्थले सः सः रसः कथं हि आस्वाद्यमानो भवितुमर्हेत्। मृच्छकटिकस्य लोकप्रियतायाः प्रमुखं कारणं तस्य नानारसपेशलत्वमपि। प्रस्तावनायामेव द्रष्टा हास्यरसस्य पुटमनुभवति। शृङ्गाररसस्तु तस्य प्रधानो रसोऽस्त्येव। प्रथमाङ्कस्थचतुर्थाद् दृश्यादेव तदुदयच्छटाभिरामा दृग्गोचरीभवति। पञ्चमाङ्कस्य चतुर्थे दृश्ये सम्भोगशृङ्गारः कृत्स्नतयास्वाद्यते सचेतोभिः—

एतैः पिष्टतमालवर्णकनिभैरालिप्तमम्भोधरैः
संसक्तैरुपवीजितं सुरभिभिः शीतैः प्रदोषानिलैः।
एषाम्भोदसमागमप्रणयिनी स्वच्छन्दमभ्यागता
रक्ता कान्तमिवाम्बरं प्रियतमा विद्युत् समालिङ्गति ॥ ५।४६

चतुर्थेऽङ्के दृश्ये चतुर्थे विदूषको रत्नावलीं वसन्तसेनायाः समर्पयति यदा, तदानीमद्भुत-हास्ययोः सद्भावो युगपदेव कियत् सुखं न सञ्चारयति सहृदय-हृदये। नवमेऽङ्के—

"मैत्रेय भोः! किमिदमद्य ममोपघातो
हा ब्राह्मणि! द्विजकुले विमले प्रसूता।
हा रोहसेन! नहि पश्यसि मे विपत्तिं
मिथ्यैव नन्दसि परव्यसनेन नित्यम् ॥" ९।२९

इत्यादावथ च दशमेऽङ्के—“

उत्तिष्ठ भोः ! पतित-साधुजनानुकम्पिन्
निष्कारणोपगतबान्धव ! धर्मशील ! ।
यत्नः कृतोऽपि सुमहान् मम मोक्षणाय
दैवं न संवदति किं न कृतं त्वयाद्य ॥ १०।३१

रोह०—अले चाण्डाल। मं मारेध, मुञ्चध आवुकं।···किं मए गदेण कादव्वं ? इत्यादिषु च करुणरससागर उच्चैरुत्तरलीभवन् केन न दृश्यते ? कस्य न हृदयं शोकेनाप्लावितं सञ्जायते; को न क्रन्दन् श्रुतो भवति। अष्टमेऽङ्के—‘चिट्ठ ले दुट्टशमणका ! चिट्ठ’ इत्यादीनि वाक्यानि भयमुत्पादयन्ति; “अज्ज वि दे हिअअगदं तुमं च शमं ज्जेव मोडेमि” इत्यादिवाक्यानि च बीभत्सं जनयन्ति केन नानुभूयन्ते ? किञ्च चतुर्थेऽङ्के—“एसा उण का ? फुल्लपावारअ-पाउदा उवाणह-जुअलणिक्खित्त-तेल्ल-चिक्कणेहिं पादेहिं उच्चासणे उवविट्ठा चिट्ठदि” ······“अहो ! से अपवित्तडाइणीए पोट्टवित्थारो। ता किं एदं पवेसिअ महादेवं विअ दुआरसोहाइध घरे णिम्मिदा ?” इत्यादीनि विदूषकवचांसि भृशं हृदये हास्यानन्दं सञ्चारयन्ति सज्जनान् नितरां रञ्जयन्ति। शर्विलकार्यकयोरुक्तिभ्यः क्वचित् क्वचिद् वीररसस्याभा सम्यग् वर्धन्ती प्रतिलक्षिता भवति। चिन्ता-निर्वेदग्लानिप्रभृतिसञ्चारिभावा यथावसरं रसिकेभ्यः स्वां सेवां समर्पयन्तः समवाप्यन्ते। एतेन विवेचनेन शूद्रकस्य कविप्रतिभावत्त्वं साधु विदितं जायते। तदीयादेतस्माद् गुणात् तस्य रचनायां कमनीयमेव रसव्यञ्जकत्वं प्रस्फुरति।

कविर्यदपि वर्णयति तस्य दृश्यं समक्षे साकारं भवत् समुपतिष्ठते। यदासौ—

“दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
पापं कर्म च यत् परैरपि कृतं तत्तस्य सम्भाव्यते ॥” १।३६

इत्यादिना दारिद्र्यं,

“चिन्तासक्त-निमग्न-मन्त्रि-सलिलं दूतोर्मिशङ्खाकुलं
पर्यन्त-स्थित-चार-नक्र-मकरं नागाश्वहिंस्राश्रयम्।
नानावाशक-कङ्क-पक्षिरुचिरं कायस्थ-सर्पास्पदं
नीतिक्षुण्णतटञ्च राज-करणं हिंस्रैः समुद्रायते ॥” ९, १४

इत्यादिना राजाधिकरणं,—

"महावाताध्मातैर्महिषकुलनीलैर्जलधरै-
श्चलैर्विद्युत्पक्षैर्जलधिभिरिवान्तःप्रचलितैः ।
इयं गन्धोद्दामा नवहरितशष्पाङ्कुरवती
धरा धारापातैर्मणिमयशरैर्भिद्यत इव ॥" ५, २२

इत्यादिना च वर्षां वर्णयितुमुपक्रमते तदा तत्तद्वस्तुनो दृश्यं पाठकस्तदनुभूति-प्रीतिमास्वादयन् पश्यति ।

यन्मृच्छकटिकमुत्तमां कोटिं नयति तदस्ति तस्य कथावस्तु । तदीया कथा-तितरामेव प्रस्फुरता घटनाचक्रेण पूर्यमाणास्ति । अत एव प्रकरणमिदं नितरां लोकप्रियतामुपेतमस्ति । रूपकस्यास्य प्रशंसनीया विशिष्टतेयमपि विभातितमां यत् तत् स्वसमयवर्तिनो देशस्यावस्थोपरि सम्यक् प्रकाशं क्षिपति । तदवलोक्य ज्ञायत इदं यत् तदानीन्तनेऽपि युगे समाजे ब्राह्मणानां महत् सम्मानमासीत् । 'विद्याविशेषालङ्कृतः किं कोऽपि ब्राह्मणः काम्यते;' 'पूजनीयो मे ब्राह्मणजनः' इत्यादिपंक्तिभिर्ब्राह्मणानां विद्यावत्त्वमथ च तेषां समाजे प्राप्तप्रतिष्ठत्वं ज्ञातं जायते । परं ते नानादुर्व्यसनेष्वपि निलीना अदृश्यन्त-इत्यत्र प्रमाणं शर्विल-कोऽस्ति । तेऽध्ययनाध्यापनादि स्वकर्म विहाय व्यापारादिकमप्याचरन्ति स्मेत्यत्र तु चारुदत्त एव निदर्शनम् । स सार्थवाह आसीदिति रूपककृता लिख्यत एव । जातिवादस्तदा प्रचण्डतर आसीदिति 'अरे ! तुमं पि को'? 'अरे का मह जादी ?' इत्यादिकानि वाक्यानि स्पष्टमेव तथ्यमिदं निदधति । नगरे तत्तद्-वृत्तिवाहिनां पृथक् पृथग् वसतय आसन् । द्वितीयाङ्के चारुदत्तस्य संस्तवं प्रददानः संवाहकः कथयति—'स खलु श्रेष्ठिचत्वरे प्रतिवसति । नगराणि राजमार्गैः सुशोभितान्यवालोक्यन्त । रक्षिणामपि व्यवस्थासीत् । परं रात्रौ दीपस्तम्भानां सम्यक् प्रबन्धो नावाप्यत अतो राजमार्गा अपि अन्धकाराक्रान्ता अदृश्यन्त । तमसि-विट-चेटादिका भ्रमन्तः समलक्ष्यन्त । रात्रौ मार्गेऽटनमापज्जनकमासीत्[१] । घण्टापथे निर्भयं जनाः कलहायन्तो मिथः प्रताड्यन्तः प्रायेणावाप्यन्त । यानार्थं वृषशकटिकाश्वादिकाः[२] प्रायुज्यन्त । धनवन्तो वाहनत्वेन गजानपि[३] प्रायुञ्जत ।

---

[१] प्रथमोऽङ्कः । [२] 'पवहणं चिट्ठति' अं० ६ ।

[३] अज्ज आए गन्धगअं—अं०—२ ।

पत्नीत्वेन सवर्णा स्त्री पर्यगृह्यत परमसवर्णाया ग्रहणमपि प्रतिषिद्धं नासीत्। ब्राह्मणाः कस्यापि वर्णस्य नारीं परिगृह्णन्तश्च अदृश्यन्त। सतीप्रथाया[1] अपि प्रचार आसीत्। समाजे द्यूतस्य प्रचलनं, दास-प्रथा वेश्यापरता च अदृश्यन्त। 'द्यूतं' हि नाम पुरुषस्य असिंहासनं राज्यम्'; 'सुवृत्त, अदासो भवतु'; 'दरिद्र-पुरुषसंक्रान्तमनाः खलु गणिका लोके अवचनीया भवती'त्यादीनि वचांस्यत्र प्रमाणम्। तस्मिन् काले कलानामवस्थात्युन्नतासीत्। जनानां संगीते महती रुचिरवाप्यत—

तं तस्य स्वरसंक्रमं मृदुगिरः श्लिष्टञ्च तन्त्री-स्वनं,
वर्णानामपि मूर्च्छनान्तरगतं तारं विरामे मृदुम्।
हेलासंयमितं पुनश्च ललितं रागद्विरुच्चारितं
यत्सत्यं विरतेऽपि गीतसमये गच्छामि शृण्वन्निव ॥ ३, ५ ॥

चित्रकलायाश्च सर्वत्र प्रचार आसीत्—"चित्रफलअ-विसण्णदिट्ठी मदणिआए" ( अं०-४ ) प्रतिमा-निर्माणकलायामपि जना दक्षा आसन् ( अ० २ ), देशस्यार्थिकावस्था नितरामेव वरमासीत्। शिशवस्तदा सुवर्णघटितक्रीडनकैरक्रीडन्—इत्यस्मिन् विषयेऽपि सङ्केतो लभ्यते। वैदिकधर्मस्य बौद्धधर्मस्य चोभयस्य प्रचार आसीत्—'यासां वलिः सपदि मद्गृहदेहलीनाम्'—अ० १; 'शक्क शमणके शंवुत्तेति अ, २। रूपकस्याध्ययनेन स्फुटतयैव तस्मिन् काले राजनीतिकी दशा शोचनीयतां गतासीदिति ज्ञायते। देशो लघु-लघुराज्येषु विभक्त आसीत्। शासन-प्रवन्धोऽतिश्लथोऽवाप्यत। अपराधिनोऽतिकठोरतया-दण्ड्यन्त च।

संस्कृतरूपकेषु वस्तुतो, मृच्छकटिकमत्यद्भुतमनुपमञ्च रूपकम्। तत्र रूपककारेणातिवैदग्ध्येन प्रेमकथा राजनीतिकघटनाभिः सह निबध्य गीतास्ति। संस्कृतसाहित्ये चरित्र-चित्रणप्रधानेषु रूपकेष्वन्यतमं रूपकमिदम्। तत्र सर्वविधानामपि पात्राणां सन्निवेशः कृतो रूपककारेण तस्मात् तत्र समाजस्य यथार्थं सजीवं च चित्रं दृग्गतं सञ्जायते। तत्र जीवन-घटनानां च विविधानां समुपस्थितत्वात् तद्रङ्गमञ्च-कृते नितान्तमेवोपयुक्तं वर्तते। प्रकरणस्यास्यैकैकोऽङ्कः स्वस्व-विशिष्टतां निदधाति। नास्त्येकोऽप्यङ्कः एतादृक् यो न स्यात् वैलक्षण्यभाक्।

[1] अं० १०।

क्वचिद् द्यूतकरस्य संवाहकस्य वर्णनं दर्शक-मनो रञ्जयति ; क्वचिद् ब्राह्मण-चौरः शर्विलकः स्वप्रणयिन्याः कारणेन सन्धिमनुतिष्ठति ; क्वचित् प्रवहणानां विपर्ययो भवति क्वचिदुद्याने वसन्तसेनाया व्यापादनाय कुयत्नं शकार आचरति ; क्वचिदधिकरणस्य दृश्यमस्ति तु क्वचिद् वधस्थलस्य । यद्येकतः पति-भक्तिः ; करुणा, गुणेषु आसक्तिः, उदारता च स्वां दिव्यामाभां किरन्त्यो वीचयन्ते तह्येकतः कपट-दम्भ-क्रौर्य्य-मौर्ख्यादिविषयिण्यास्तमिस्राया घोरं तमः प्रसृतं दृश्यते ।

मृच्छकटिके नवनवा भावाः, रमणीया उपमाः, सरसाश्च कल्पनाः प्रतिपद-मवाप्यन्ते । भाषा तत्र सरला प्रवाहमयी च विद्यते । अस्ति सा पूर्णतया कथा-वस्त्वनुगुणा । तस्यां कालिदासस्य चारुता भवभूतेश्चोदात्तता न, न च जीवनस्य महतां सत्यानामपि चित्रणं परं भावानां मार्मिकं चित्रणं यादृशं तत्र चकास्ति तादृशमन्यत्र न ।

चरित्रचित्रणेऽपि शूद्रकस्य प्रतिभाऽप्रतिमा । तस्य रचनायाः सर्वाण्यपि पात्राणि दर्शकस्य मानसपटले नैजं प्रभावं स्थापयन्ति । न सचेतास्तेष्वेकतम-मपि विस्मर्तुं शक्नोति । येनापि गुणानुरागिणी उदारस्वभावा शरणागतवत्सला दयामयमानसा उपकाररता नानाकलासु कुशला अनाविलचरिता लोकोत्तर-लावण्यवती वसन्तसेना सकृदपि दृष्टा स कदेदं सम्भवं यत् तां स्वमनोमन्दिरे प्रतिष्ठाप्य नात्मानं धन्यं मन्येत ।

स चारुदत्तः कस्य न प्रियः स्यात् यः सदाचारस्य परमोज्ज्वलं निदर्शनमा-सीत् यो याचकानां प्रणयैर्दरिद्रीकृतः ; येन विभवैर्न कोऽपि विमानितः ; येन स्वचरित्रेण धरेयं गरिमाणं नीता ; यः स्वयशोविनाशमेव मृत्युं मेने ; यं हि जगदेवमुपश्लोकयाञ्चकार—

दीनानां कल्पवृक्षः स्वगुणफलनतः सज्जनानां कुटुम्बी
आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः ।
सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो
ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥१।४८॥

अहह, सुहृदेकप्राणस्य मैत्रेयस्य—

( क ) "किं अण्णं, तहिं गदुअ गेण्हिस्सदि । णिअन्तीअदु गणिआत्तप-सङ्गादोत्ति" । पृ० २५३, ( चौखम्वा प्र० )

(ख) "भण भण ममाग्रतः, य इदानीं मम प्रियवयस्यः कुसुमितां माधवीलतामप्याकृष्य कुसुमावचयं न करोति... स कथमीदृशमकार्यमुभयलोकविरुद्धं करोति... मस्तकं ते शतखण्डं करोमि। पृ० ५०४;

(ग) "जुत्तं णेदं... ता वम्हणीए दारअं... पिअवअस्सं अणुगमिस्सं"। पृ० ५५५

इत्यादीनि वचनानि स्मारं स्मारं को न मानवो भवति चिरं विस्मृतसकलव्यापारः। वस्तुतः शकार-शर्विलक-संवाहक-स्थावरक-चन्दनकार्यक-धूतादिकानां सकलानामपि पात्राणां चरित्रस्य चित्रणे कविना स्वप्रतिभाया आश्चर्यकरं कौशलमाकलितम्। मानवस्याल्पज्ञत्वात् तत्कार्ये दोषस्तु सम्भव एव। अत एव क्वापि चरित्र-चित्रणे सञ्जाता कापि न्यूनता नो मनो मनागपि स्पृशति। केषाञ्चन मतिमतां मनांसि रूपकस्यास्याधोलिखितास्त्रुटयो व्यथयन्ति—

१. प्रकृतिवर्णनस्य न्यूनता, प्राप्तस्यापि प्रकृतिवर्णनावसरस्योपेक्षणम्।

२. षष्ठाङ्कस्थदृश्यस्य पञ्चमाङ्कपर्यन्तगामिन्याः कथायाः अग्रवर्तिन्या कथया सह संयोजनेऽक्षमता।

३. वसन्तसेनां सुप्तां विहाय चारुदत्तस्य पुष्पकरण्डकजीर्णोद्यानगमनम्—इत्येतस्याः घटनाया अस्वाभाविकता।

४. "सुट्ठु ण णिज्झाइदो रत्तीए, ता अज्ज पच्चक्खं पेक्खिस्सं"। इत्येतस्मिन् वाक्ये कथाया उपसारणेऽसमर्थता।

५. 'सम्पदं अधिअलणं गच्छिअ ववहालं लिहावेमि' इत्युक्त्वापि शकारस्याधिकरणम्प्रति परस्मिन्नहनि गमनम्—इत्यादिकाभिर्वार्ताभिः कथाया अपकर्षणम्।

६. सत्यामपि वसन्तसेनायामादर्शगणिकायां, तस्या असार्वकालिकासार्वदेशिकपात्रत्वम्।

७. पञ्चमाङ्कस्थान्तिमदृश्यं हित्वा न कस्मिन्नपि दृश्ये कस्यापि रसस्य पूर्णतया परिपक्वत्वम्।

अस्मिन् रूपके शूद्रकेण मानवस्य प्रेम चित्रयता सन्दिष्टमिदम्—सत्यस्य प्रेम्णस्त्यागस्य च फलं भवति वरम्। एतेषां गुणानां सद्भावे संसारेऽपि सुखमवाप्तुं शक्यम्।

रूपकमिदमधिकृत्य विद्वान् देऽभिदधाति—

"दी ड्रामा इज आल्सो सिंगुलर इन कन्सीविंग ए लार्ज नम्बर ऑफ इण्टरेस्टिंग करेक्टर्स, ड्रॉन फ्रॉम ऑल ग्रेड्स ऑफ सोसाइटी, फ्रॉम दी हाइ सोल्ड ब्राह्मण टू दी स्नीकिंग थीफ ; दे आर प्रजेण्टेड नॉट एज टाइप्स, बट एज इंडिविजुअल्स ऑफ डिवर्सीफाइड इंटरेस्ट ; एंड इट इन्क्ल्यूड्स इन इट्स ब्रॉड स्कोप, फार्स एन्ड ट्रेजेडी, सॉटायर एन्ड पेथोज, पोइट्री एण्ड विज्डम काइंडलीनेस एन्ड ह्यूमेनीटी।"

~~~
~~~

## नलचम्पूः

संस्कृतवाङ्मये 'चम्पू' रित्येतामभिधां भजमानस्य काव्यस्य अवतारणा गद्यकाव्यानन्तरं संवृत्ता। चम्पूकाव्यं, वस्तुतः, गद्यकाव्यस्यैव उपबृंहणं प्रतीयते। तस्मात् तस्य जन्मगद्यकाव्यस्यानन्तरं स्वाभाविकतया च सिद्ध्यति। दशमात् शतकात् प्राक् चम्पूकाव्यस्य न भवति दर्शनम्। यद्यपि वैदिकसंहितासु—कृष्णयजुर्वेदीयसंहितासु—गद्यपद्ययोर्मिश्रणं दृश्यते परं न स गद्य-पद्ययोर्योगस्तादृशो, यादृशो हि चम्पूकाव्येऽभिमतः। चम्पूकाव्यं गद्य-पद्ययोर्मिश्रणाय अन्यामेव विधामभिलपते। न सा विधा वैदिके साहित्येऽवाप्यते न च पालीभाषारचितेषु गद्यपद्यमिश्रेषु जातकेषु। आर्यशूरस्य जातकमालायामपि गद्य-पद्ययोर्निधानं येन विधिनानुष्ठितं स विधिरपि न चम्पूकाव्यलक्षणकृतामिष्टः। इदन्त्ववश्यं जातकमालायामङ्गीकृता गद्य-पद्यमेलनपद्धतिः किञ्च हरिषेणकृतायां प्रयागप्रशस्त्यां स्वीकृता गद्य-पद्यमिश्रणात्मिका रीतिश्चम्पूकाव्यस्य स्वरूपाधानकर्मणि साहाय्यं प्रादत्ताम्। चम्पूकाव्यस्यान्तर्भाव आख्यायिकायामपि न भवति। आख्यायिकायां नायकः स्वयं वक्ता भवति किञ्च तत्र वक्त्रापरवक्त्रच्छन्दसोः प्रयोगोऽभीष्टो भवति अत्र तु न। चम्पूकाव्यस्य लक्षणं 'गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते' इत्येतद् विहितं यत्, तत्र लक्षणकारैरभिलप्यते यच्चम्पूकाव्ये भावात्मकानां विषयाणां वर्णनं पद्येषु स्यात् किञ्च वर्णनात्मकानां विषयाणां विवरणं गद्येषु। सम्भवत एतद्विधस्यैव सौन्दर्यस्य चम्पूषु वाञ्छितत्वाद् भोजराजः—

> "गद्यानुबन्धरससमिश्रितपद्यसूक्ति-
> र्हृद्यापि वाद्यकलया कलितेव गीतिः।"

इत्याचख्यौ।

साम्प्रतं यानि चम्पूकाव्यान्युपलभ्यन्ते तानि सन्ति दशमशतकार्वाक्कालगामीनि। परं षष्ठे शतके सम्भूतो हि काव्यादर्शकारो दण्डिकविश्चम्पूकाव्यस्य लक्षणं लिखन् दृश्यते। एतेन तु चम्पूकाव्यानां रचना तस्मिन् काले वा तत्कालात् प्रागपि सञ्जातेति सिद्ध्यति।

पुरातनतमं यच्चम्पूकाव्यमद्योपलभ्यते तदस्त्यस्मद्वीयं प्रस्तुतमिदं 'नलचम्पूकाव्यम्'। नलचम्पूकाव्यस्य प्रणेता त्रिविक्रमभट्टः पञ्चदशाधिकनवमशततमेशवीये संवत्सरे शाण्डिल्यान्वयं संवर्धयामास। नौसारीस्थशिलालेखात् तस्य नेमादित्यसूनुत्वं सिद्ध्यति। स हैदराबादान्तर्गतस्य राष्ट्रकूटकुलचूडामणेरिन्द्रराजस्य तृतीयस्य राजसभायाः प्रमुखपण्डित आसीत्। नलचम्प्वा रचनायाः कालोऽन्तरङ्गं वहिरङ्गं च प्रमाणमवलम्ब्य निश्चितो भवितुमर्हति। नलचम्प्वाः प्रथमे उच्छ्वासे त्रिविक्रमो बाणभट्टस्य नाम निर्दिशति—

> शश्वद् बाणद्वितीयेन नमदाकारधारिणा।
> धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः॥

एतेन तस्य बाणादर्वाग्वर्तित्वमथ च—

> पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम्।
> हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी॥

नलचम्प्वाः श्लोकस्यास्योपरिस्थितस्य भोजराजकृतसरस्वतीकण्ठाभरणे दृष्टत्वात् तस्य स्थितिर्भोजराजात् प्राग्वर्तिनी सिद्ध्यति। इदन्त्वस्त्यन्तरङ्गं प्रमाणम्
मान्यखेट( हैदराबादमण्डलान्तर्गत ) महीपेन्द्रराजतृतीयस्याभिषेकावसरे ( पञ्चदशाधिकनवमशततमेशवीयाब्दे ) कुरण्डकताम्रलेखोऽनेनैव कविना त्रिविक्रमेण लिखितः। स ताम्रलेखश्च वहिरङ्गं प्रमाणमस्ति। एताभ्यां वहिरङ्गान्तरङ्गाभ्याञ्च प्रमाणाभ्यां नलचम्पूप्रणेतुस्त्रिविक्रमस्य दशमशतकवर्तित्वं स्पष्टमेव विदितं जायते।

त्रिविक्रमस्य द्वे कृती स्तः—मदालसाचम्पूः, नलचम्पूश्च।

संस्कृतसाहित्ये त्रिविक्रमस्य ख्यातौ कारणमस्ति तदीया श्लेषनिवन्धननैपुणी। श्लेषस्य प्रयोगस्तु वासवदत्तायां तेन सुबन्धुनापि कृतो यः स्वयमात्मानं 'प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधि'रिति घोषयति। वस्तुतो घोषणायामस्यां तदीयायामणुमात्रमपि नास्त्यनृतम्। आसीदपि सः प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिः। अतएव तु तद्रचनां वासवदत्तामुद्दिश्य बाणः शंसति—

> कवीनामगलद्दर्पो नूनं वासवदत्तया।
> शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्॥

परं सुबन्धोः श्लेषयोजनायां विद्वांस आपत्तिद्वयं निदधाना दृश्यन्ते। 'सुबन्धोः श्लेषा दुरारोहा भवन्ती'त्येषा प्रथमा किञ्च 'श्लेषयोजनायां प्रायः अभङ्गश्लेषस्यैव चमत्कारो भवती'त्येषास्ति द्वितीयापत्तिः। परं त्रिविक्रमस्य श्लेषयोजना सरला-

सभङ्गा च भवति। सभङ्गश्लेषस्य योजनायां यादृशं सारल्यं त्रिविक्रमो दर्शयति न तादृशमन्यः कोऽपि कविः प्रयुञ्जानः प्राप्यते। सभङ्गश्लेषस्य प्रयोगो यद्यपि कतिपयैः कविभिः कृतः परमर्थप्रतीत्यर्थं तत्र पदानामेतावदामर्दनं करणीयं भवति यच्छ्लेषयोजनं तत् सचेतसामपि चेतसि अरुचिं जनयति किञ्चार्थप्रतीतिनिमित्तेन सहृदयानां दुःसाध्यश्रमाचरणमपेक्षणीयं सञ्जायते। त्रिविक्रमस्य सभङ्गश्लेषा न सन्त्येवंविधाः। पाठकोऽल्पेनैव श्रमेणोभयपक्षस्यार्थबोधने क्षमो भवति। त्रिविक्रमस्य श्लेषे मनोऽतितरां रमते, तन्मतेन पुण्यशालिनः कवय एव वाणीं विविधश्लेषविलासैर्विभूषयितुं भवन्ति समर्थाः—

"प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः।
भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः॥"

लघुलघुषु अनुष्टुब्वृत्तेषु सरलसभङ्गश्लेषयोजने निःसंशयं त्रिविक्रमस्य वाणी महतीं विदग्धतां बिभर्ति—

"अप्रगल्भाः पदन्यासे जननीरागहेतवः।
सन्त्येके बहुलालापाः कवयो बालका इव॥"

अत्र श्लोके समागतानि 'पदन्यासे', 'जननीरागहेतवः', 'बहुलालापाः' इत्येतानि पदानि श्लेषवशादेव चमत्कारचारुतां वहन्ति।

शाब्द्यां क्रीडायां निहितमनस्कत्वात् त्रिविक्रमस्य, तस्य कथायाः प्रवाहे न युक्ततरं निर्वहणं समवाप्तं भवति। वस्तुतः कथा-निर्वहणस्य चिन्तैव न तन्मानसे विद्यते। श्लेष-विनिबन्धनाय शब्दानां चयनमेव सः सर्वस्वं मन्यमानस्तत्रैवात्मानं रमयति। प्रथमोच्छ्वासे मृगयायाः किञ्च षष्ठोच्छ्वासे विन्ध्याटव्याः वर्णनस्य विपुलता कथा-प्रवाहं नितरां निरुध्य विजृम्भते। कविः स्वस्य कवित्वस्य प्रयोगं श्लेषयोजनायां वर्णनायाञ्च विधायैव परां तृप्तिं गतोऽस्ति। न कवित्वमेतावदेव। येन स आत्मानं कृतकृत्यं मेने तत् तु तदीयं बाह्यमेव रूपमित्यत्र स स्तोकमपि चिन्तनमुचितं न अमंस्त। सप्तमोच्छ्वास एव कथाया यदसौ संवरणं चकार तदपि इदमेव व्याहरत् प्रतीयते। यथा कविः शाब्द्यां क्रीडायां कुशलोऽस्ति तथैव स आर्थ्यामपि दक्षः। अहो यदा तदीयाः कल्पनाः उड्डीयन्ते तदा तु गङ्गायमुने द्वे अपि व्योम्नि प्रवहन्त्यौ दृक्पथेऽवतीर्णे जायेते। तद्विचित्रं दृश्यं कवेस्तामप्यभिरुचिं प्रगाढां प्रकटीकरोति या आर्थ्या क्रीडया प्रीयते। वस्तुतः

कवीनां सृष्टिर्विलक्षणैव भवति। ब्रह्मणो गङ्गा यमुना च यदि भूलोके प्रवहतस्तर्हि कवेर्गङ्गायमुने गगने प्रवाहं स्वकीयं वितत्य जनवृन्दं परिप्रीणयतः—

उदयगिरिगतायां प्राक् प्रभापाण्डुताया-
मनुसरति निशीथे श्रृङ्गमस्ताचलस्य।
जयति किमपि तेजः साम्प्रतं व्योममध्ये
सलिलमिव विभिन्नं जाह्नवं यामुनं च॥

एतस्या एव नव्यायाः ऊहाया हेतोः कविरयं त्रिविक्रमः 'यमुनात्रिविक्रमः' इत्येतया प्रशस्त्या विश्रुतोऽस्ति बुधमण्डले। चण्डपालः कवेरस्यानया यमुनाविषयिकया कल्पनया परां प्रीतिं विन्दन् कविमिममेवं स्तवीति स्म—

प्राच्याद् विष्णुपदीहेतोरपूर्वोऽयं त्रिविक्रमः।
निर्ममे विमले व्योम्नि तत्पदं यमुनामपि॥

भावात्मकेष्वपि स्थलेषु त्रिविक्रमः श्लेषं प्रयुञ्जानः प्रेक्ष्यते। नलम्प्रति दमयन्त्या हृदयेऽनुरागः समुत्पद्यते, तस्या अङ्गेषु रतिभावोद्बोधकानां सात्त्विक-भावानामाभा वीक्ष्यते। त्रिविक्रमो भैम्या एतस्याः स्थितेर्वर्णनाय प्रौढोक्तिं श्लेषो-क्तिञ्चाश्रित्य यां विचित्रां चमत्कृतिमातनुते पश्यन्तु प्रेक्षावन्तस्ताम्—"अथ विश्रान्तवाचि वाचस्पताविवोच्चारितानष्टविस्पष्टवर्णे वर्णितनिषधराजे राजहंसे 'अहं सेवार्थी' इत्यभिधायोपरुध्यमाना कृतोत्तरासङ्गेन द्विजन्मना श्रुतानुरागेण। 'वत्से, चिरान्मिलितासि' इत्युक्त्वैवाश्लिष्टा हृदये प्रवृद्धया चिन्तया। 'पुत्रि कथं कथमपि दृष्टासि' इति संभाष्येवालिङ्गिता सर्वाङ्गेषूत्कम्पजनन्या रोमाञ्चावस्थया। 'तरुणि, त्यज्यतामिदानीं शैशवव्यवहारः' इत्यभिधायेव मुग्धे स्पृष्टा प्रमुखेण मुखे वैवर्ण्येन। 'मुग्धे मुच्यतां स्वच्छन्दभावः' इत्यनुशास्येव ग्राहिता निजाज्ञां गुरुणा मकरध्वजेन दमयन्ती।"

एतस्मिन् अवतरणे तत्तत्सभङ्गश्लेषैः कविना दमयन्त्याः अनुरागजनिता-मवस्थां वर्णयता तद्गतकम्प-रोमाञ्च-वैवर्ण्यादिसात्त्विकभावानां, चाञ्चल्यादिवयः सन्धिगतानुभावानां, चिन्तादिसञ्चारिभावानाञ्च दिशि मधुरः सङ्केतः कृतोऽस्ति; परं कविसमुत्थापितोऽशेषोऽपि चमत्कार आत्मानं शाब्द्याः सुन्दरतायाः परिवेष एव विरमयति; तस्मात्कारणात् सचेता दमयन्त्याः औत्सुक्यजनितायाः आद्याया रागोद्बोधावस्थाया अनुभूतिमेव विधातुं न पारयति। उक्तेः सकलमपि सौन्दर्यं सभङ्गश्लेषेण हेतूत्प्रेक्षया च स्वनियन्त्रणे कृतमस्ति।

दमयन्त्याः शरीरसौन्दर्यवर्णनेऽपि कवेः प्रधानं लक्ष्यं तस्याः सौन्दर्यविभ्वोद्भावनं न भूत्वा साधर्म्यमूलकार्थालङ्कारमालोपस्थापनमेव दृष्टं भवति। दमयन्तीगुण-रूप-माधुर्यचित्रणे कवेः समग्रापि क्षमता नाधिकसफलतामधिगच्छति। किञ्च कवेर्भणितेश्चमत्कारचारुतापि उत्प्रेक्षापर्यन्तमेव परिस्पन्दते—

'इतस्ततो निपतन्मण्डलमणिमयूखमञ्जरीजालच्छलेनामान्तमिव कान्तिरसविसरमुत्सृजन्तीम्, अशेषाङ्गावयवेषु प्रतिबिम्बितैरासन्नचित्रभित्तिरूपकैर्मायाविभिः सुरासुरैरिव विधीयमानाश्लेषाम्, अग्रस्थिते पद्मरागमणिदर्पणे कन्दर्पातुरे रागिणि शशिनीव करुणयार्पितच्छायाम्, अशेषजगद्विजयाक्षमालामिव मन्मथस्य, सङ्केतवसतिमिव समस्तसौन्दर्यगुणानाम्, अधिदेवतामिव सौभाग्यस्य, विपणिमिव लावण्यस्य, शिल्पसर्वस्वपरिणामरेखामिव विधातुः, अनन्तसंसाररोहणैकरत्नकन्दलीं दमयन्तीमद्राक्षम्।'

त्रिविक्रमस्य प्रकृतिवर्णनमपि एवमेव श्लेषेण प्रौढोक्त्या चाक्रम्यमाणमस्ति। तदीयं प्रकृतिवर्णनं प्रायेणोद्दीपनरूपं बिभ्राणमेव समुपलभ्यते। सकलमपि संसारं भ्रमे निपातयन्त्याः परिहसितदुग्धफेनधावल्यायाश्चन्द्रिकाया वर्णनं यद् भ्रान्तिमदलङ्कारेण कृतमस्ति तदस्ति मनोज्ञम्। परं तदीयं सौन्दर्यं कवि-प्रतिभोत्तम्भितस्य भ्रान्तिमदलङ्कारालोक-परिधेरभ्यन्तरगतमेव वर्तते न ततोऽग्रे—

मुक्तादाममनोरथेन वनिता गृह्णन्ति वातायने
गोष्ठे गोपवधूर्दधीति मथितुं कुम्भीगतान् वाञ्छति।
उच्चिन्वन्ति च मालतीषु कुसुमश्रद्धालवो मालिकाः
शुभ्रान् विभ्रमकारिणः शशिकरान् पश्यन्न को मुह्यति॥

त्रिविक्रमस्य कलायां पाण्डित्यस्य प्रतिभायाश्च हृदयहारी समन्वयो विभ्राजते। तत्र समासान्तपदसंघटनाया आभा अनुप्रासिकश्चमत्कारः प्रकृष्टकोटिमाटीकमाना गौडीरीतिश्च विलक्षणामेव लक्ष्मीं सृजन्ती पर्यवलोकिता भवति। इह विन्ध्यस्थलीवर्णनात् द्वित्रिस्थलानि उद्ध्रियन्ते। तान्यवलोक्यास्य कवेरुपरि निर्दिष्टा विशिष्टता तु भवेदेव ज्ञाता प्रकृतेरपि सौन्दर्यरूपेपस्थापने भवभूतिरिवायमपि कविः परमनिष्णात इत्येतदपि विदितं स्यात्—

"माद्यद्दन्तिकपोलपालिविगलद्दानाम्बुसिक्तद्रुमाः
क्रीडत्क्रोडकुलार्धचर्वितपतन्मुस्तारसामोदिताः।

अन्तःसुस्थितपान्थमन्थरमरुल्लोलल्लताम‌ण्डपाः
कस्यैता न हरन्ति हन्त हृदयं विन्ध्यस्थलीभूमयः ॥"

उपरिस्थितः श्लोको भवतां पुरो विन्ध्यभूमीनां शोभां न्यदधात् सम्प्रति नर्मदायाश्च श्रियं विलोकयन्तु सुधियः—

"एषा सा विन्ध्यमध्यस्थलविपुलशिलोत्सङ्गरङ्गत्तरङ्गा
सम्भोगश्रान्ततीराश्रयशवरवधूशर्मदा नर्मदा च।
यस्याः सान्द्रद्रुमालोललिततलमिलत्सुन्दरीसंनिरुद्धैः
सिद्धैः सेव्यन्त एते मृगमृदितदलत्कन्दलाः कूलकच्छाः ॥"

काननस्य कमनीयतापि कविना नितरां ललिता लिखितास्ति तत्र मधुलिहां गुञ्जनं, तुङ्गतुङ्गतरतरूणां पङ्क्तयः, गोलाङ्गूलानामितस्ततः उत्प्लुतिर्विविधवर्णवन्धुराणां विहगानामवलयः, कोकिलानां मधुरो रवः, तमालाशोक-मुचुकुन्दादिपादपाः, सुमनसां मकरन्दसीकरासाराः, चकोर-सारस-कुरर-कपोत-कुक्कुट-कुक्कुहमयूरादीनां कुलञ्च दृष्ट्वा क एतादृग् यस्य न मनो मोदेत। क्षणं कविचित्रितं वन-चित्रं पश्यन्तु भवन्तः—

"तदेवंविधेपून्मिपन्मुकुलविगलितवहलमकरन्दसीकरासारसुरभितभूतलेषु मुग्धमृगपरिहृतदावानलज्वालायमानोन्मदशवरसीमन्तिनीचरणप्रहारविकसिताशोककाननेषु नवजलधरनिकुरम्बकान्तितमालतरुशिरःस्थितशब्दानुमेयमाद्यन्मयूरमण्डलेषु मदनालसपुलिन्दराजसुन्दरीशिक्ष्यमाणवनकपोतकुक्कुटकुक्कुहकुलकुहरितेषु कूजत्कुररपरिवारितसरःपरिसरेषु चलच्चकोरसारसरवरमणीयेषु विहरतु देवः सह सैन्येन नर्मदोर्मिमन्दानिलान्दोलितलतापल्लवेषु वनेषु।"

कविचित्रिते हि एतस्मिन् मनोभिरामे चित्रे वर्षायाः श्रीः दृक्पथेऽवतरति किं वा अभिसारिकाणां सुषमा निश्चीयतां तावत्—"अथ कदाचिदुन्नमत्पयोधरान्तरपतद्धारावलीविराजिताः, कमलदलकान्तनयनाः, सुरचापचक्रवक्रभ्रुवः, विद्युन्मणिमेखलालंकारधारिण्यः, शिञ्जानामुक्तककलहंसकाः, प्रौढकरेणुसञ्चारहारिण्यः, कम्रकन्धराः, तिरस्कृतशशाङ्ककान्तिकलापोच्चमुखमण्डलाः, सकलजगज्जेगीयमानगुणमिममनुपमरूपलावण्यराशिराजितं राजानमवलोकयितुमिवावतरन्ति स्म वर्षाः।"

त्रिविक्रमस्य वर्णनानि सन्ति यद्यपि श्लिष्टानि परं सर्वत्रापि तत्र प्राञ्जलः प्रवाहः, प्रकाशमयं जीवनम् लोकोत्तरा स्फूर्तिः, हृदयानन्दावहं चाञ्चल्यं, रुचि-

परिपोषिणी स्वरलहरी च समुच्छलन्ति। यदपि कविर्वर्णयति तत् साकारं भवन् नेत्रयोः पुरस्तान्नरीनृत्यति। यदा तत्कृतं मृगयावर्णनं स्मृतमेव भवति तदास्माकमग्रे कार्दमिककर्पटावनद्धमूर्धजा दण्डखण्डपाणयः क्रूरकर्मोचिताकारा वागुरावाहिनोऽनन्ताः पाशहस्ताः पापर्द्धिकाः समुपस्थिताः सञ्जायन्ते; भयादुन्नमितकन्धराः ऊर्ध्वकर्णसम्पुटा अकाण्डोड्डीनप्राणा वनप्राणिनः सर्वत्र सन्तिष्ठमाना लोचनगोचरीभवन्ति; हयानां हेषारवं श्रोत्रेन्द्रियं श्रोतुमारभते; शकुनिकुलस्य कोलाहलेनास्मन्निकेतनमपि पूर्यमाणं जायते; भयङ्कराः सारमेयाः हृदये भीतिमुत्पादयितुमारभन्ते, गज-केशरिभल्लूकसमाकुलानि निविडानि वनानि शरीरस्य सकलामपि रोमावलिं वेपयितुञ्चोपक्रमन्ते।

चेन्मनसि कृतसर्वर्तुनिवासस्य विपिनस्य दर्शनाकाङ्क्षा जागर्ति, चेत् षड्रसेष्वाहारेष्वौत्सुकता वर्धते, चेन्नाट्यपरिपाटीपटूनां नटानां नृत्येषु दृष्टिः प्रीतिं निबध्नाति, चेदमृतस्रुतां कविवाचामाकर्णने चित्तवृत्तिस्त्वरते, चेद्वीणाप्रवीणकिन्नरमिथुनगीतानि श्रोतुं कामनातितरामेधते, चेल्लोचनोत्सवकराणां विलासिनीलास्यविलासानां विलोकनार्थं नयनानि सन्त्युत्कण्ठितानि, चेन्मृदुवाद्य-विशेषशब्दश्रवणेऽभिलाषो वलीयांस्तदापि त्रिविक्रमस्य कृतिं नलचम्पूं निषेवन्तां सचेतसः।

अहो, त्रिविक्रमकृतं नलचम्पूकाव्यं केन प्रकारेण उपश्लोक्येत। काव्यकला स्वयमेव नलचम्पूः भूत्वा भूम्यामवतीर्णेव प्रतिभाति। अत्र यदा पाठका विलासविहगानां मञ्जुवलभीं स्मरराजस्य राजधानीं शृङ्गारस्य रङ्गशालां दमयन्तीं निभालयन्ति तदा तु ते ब्रह्मानन्दसहोदरमथवा ब्रह्मानन्दादपि गरीयांसमानन्दमनुभवन्ति पुनः पुनः।

अमृतद्रववर्णकैरिव चित्रितावयवां मोहनमणिशिलायामिवोत्कीर्णाम्, आनन्दकन्दलैरिव घटिताम् शृङ्गारदारुणि इवोत्कुट्टिताम् वशीकरणपरमाणुभिरिव विनिर्मिताम्, मदनमृत्पिण्डेनेव निष्पादिताम्, वज्रलेपपुत्रिकामिव दृशोः, आकर्षणमणिशलाकामिव हृदयस्य, जीवनौषधिमिवानुरागस्य, जयपताकामिव मदनस्य, सङ्केतवसतिमिव समस्तसौन्दर्यगुणानाम्, अधिदेवतामिव सौभाग्यस्य विपणिमिव लावण्यस्य, शिल्पसर्वस्वपरिणामरेखामिव विधातुः, अनन्तसंसाररोहणैकरत्नकन्दलीं दमयन्तीमालोक्य सतां मनो विस्मृतसकलव्यापारं भवति न चन्द्रे, न कमले, न प्रवाले, न रम्भायाम्, न इन्द्रधनुषि, न सरिद्वीचिषु, न कोकिलालापे, न शिखिनां नृत्ये, न हंसगत्यां, न सरसि, नोद्याने, न भजने, न

चान्यत्रापि कुत्रापि तत् तादृशीं रुचिमनुबध्नाति यादृशी त्रिविक्रमस्य सृष्टौ नलचम्प्वाम् संसृष्टायां दमयन्त्याम् ।

चतुर्थे उच्छ्वासे सालङ्कायनो नलं यद् यद् उपदिदेश तत् सर्वं तेषां कृते परमहितकारकं येषां कल्याणेऽभिनिवेशः । तदधीत्य निशम्य च चेतसो मलिनतापहृता भवति, आदर्शमार्गः समवाप्तो जायते; अज्ञानं विध्वस्ततां गच्छति; ज्ञानज्योतिः प्रादुर्भवति; विपदो विनश्यन्ति; सम्पदश्च सर्वविधाः समुन्मीलन्ति । स्वपाठकान् प्रति त्रिविक्रमस्य मनसि कियती महती हितचिकीर्षा राजते—इत्येष विचारस्तत्काल एव हृदये समुत्थितो भवति यदा तत्रत्यं स्थलं सालङ्कायनकृतोपदेशविषयकं दृग्गतं जायते । पाठकाः—

'तत् तात, सुविषमेघवर्तिनि विद्युद्विलास इवास्थिरे स्थितस्तारुण्ये मास्मविस्मर स्मयेन विनयम् ।

आवर्जय गुणान् । निर्गुणे धनुषीव सुवंश्येऽपि कस्याग्रहो भवति । अभ्यस्य कलाः । निष्कलो वीणाध्वनिरिव प्रशस्यते न पुरुषः । मा गाः स्त्रियाः श्रियो वा विश्वासम् । अधिकमलवसतिरनार्यसंगता स्त्री श्रीश्च कं न प्रतारयति ।

किं तेन जातु जातेन मातुर्यौवनहारिणा ।
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥

इत्यादिना शिक्षाप्रदानि सन्मार्गप्रदर्शकानि चारित्र्यसमुत्थापकानि कवेस्त्रिविक्रमस्य वचांसि संसारयात्रायां स्वजीवनस्य पाथेयत्वेनावगच्छन्ति । अथ च नलचम्प्वाः—

"जयत्यमलधावनावनतलोककल्पद्रुमः
पुरन्दरपुरस्सरत्रिदशवृन्दचूडामणिः ।
अरातिकुलकन्दलीवनविनाशदावानलः
समस्तमुनिमानसप्रवरराजहंसो हरिः ॥"

इत्येवंविधहरिस्तुतिपरकानेकश्लोकसमन्वितत्वात् सुधियो मोक्षप्रदत्वं तस्य विभावयन्ति ।

नलचम्पूकाव्यं श्लेष-सुन्दरत्त्वस्त्येव तत्रान्ये च परिसंख्या-विरोधोत्प्रेक्षादीनामलङ्काराणामपि नितरामेव हृद्यः सन्निवेशः समवाप्यते । अधस्तनेऽवतरणे परिसंख्यां पश्यन्तु प्रधीप्रवराः—

"यस्मिंश्च राजनि जनितजनानन्दे नन्दयति मेदिनीम्, गीतेषु जातिसंकराः,

तालेषु नानालयभङ्गाः, नृत्येषु विषमकरणप्रयोगाः, वाद्येषु दण्डकरप्रहाराः पुण्यकर्मारम्भेषु प्रबन्धाः, सारिद्यूतेषु पाशप्रयोगाः, पुष्पितकेतकीषु हस्तच्छेदाः, न्यग्रोधेषु पादकल्पनाः, कञ्चुकमण्डनेषु नेत्रविकर्तनानि आसन् न प्रजासु।"

विरोधविभापि विलोकनीया विपश्चिद्भिः—

"पुण्यजनाश्च न च ये लङ्कापुरुषाः, ससूत्राश्च न च ये लम्पटाः, प्रसिद्धाश्च न च ये लम्पाकाः, कामवर्षाश्च न च ये लङ्घनाः सन्मार्गस्य, नववयसोऽपि न च ये लम्बालकाः, महाभारतिकाश्च न च ये रङ्गोपजीविनः, सेविताप्सरसोऽपि न च रम्भयान्विताः।"

क्षणमुत्प्रेक्षायामपि मनो रमयन्तु मनीषिणो दमयन्ती-सौन्दर्यसुधां पिबन्तः—

"आकस्मिककठोरकाष्ठप्रहारव्यथामिवानुभवन्ती, विन्दतु वीणाक्वणो माधुर्यमितीव प्रतिपन्नमौनव्रता, लभेतां कर्णोत्पले परभागमितीव मुकुलितनयना प्राप्नोतु शोभां मुक्तावली दीप्तिजालमितीव मुक्तस्मिता, गच्छतु च्छायां कण्ठावलम्बिनी चम्पकमालेयमितीवाङ्गीकृतवैवर्ण्या, लभतां लीलाकमलमिदं सौभाग्यमितीवोच्छ्वसितवदना, सा क्षणमभूत्।"

त्रिविक्रमस्य एषा कृतिर्नलचम्पूरुत्तरकालवर्तिनां कवीनां मानसानि भृशमावर्जयामास। कवयः स्वकीये गद्ये तामेव श्रियं तामेव शब्दच्छटां स्रष्टुमनिशं प्रयासमाचरितुमारेभिरे। विद्वज्जगति चम्पूग्रन्थप्रणयनस्य महती प्रगाढोत्सुकता समुदपद्यत। अयमस्य कवेस्त्रिविक्रमस्यैव प्रभावोऽवगमनीयो यद् धनपालादयस्तिलकमञ्जरीप्रभृतिगद्यकाव्यानां, सोमदेवसूरि-हरिश्चन्द्रादयश्च यशस्तिलकचम्पू-जीवंधरचम्पूप्रभृतीनां चम्पूकाव्यानां प्रणयनस्य प्रेरणां लब्धवन्तः।

त्रिविक्रमं प्रशंसन् सत्यमेवेदमाह चण्डपालः—

शक्तिस्त्रिविक्रमस्येव जीयाल्लोकातिलंघिनी।
दमयन्तीप्रबन्धेन सदा बलिमतोदिता॥

## विक्रमाङ्कदेवचरितम्

पुरातने भारते वेद-शास्त्र-दर्शन-स्मृति-कथा-पुराण-काव्यायुर्वेदज्योतिर्विद्या-ख्यायिकाधनुर्विद्यादिकाः शतशो विषया यथा शिक्षणालयेषु प्रचलिता आसन् तथैव इतिहासनामको विषयोऽप्यत्र पठन-पाठनगत आसीत्। तस्यापि प्रचार इह आसीत्। सोऽपि अत्रत्यानां विपश्चिद्वराणां लेखनीभिरनुगृहीत आसीत्। न स पुराणेष्वन्तर्भूत आसीत्, न स महाभारत-रामायणयोरेव अगण्यत। तस्य गणना तु एतेभ्यः सर्वेभ्य एव पृथगप्यवर्तत। तस्य पार्थक्ये प्रमाणं प्रथमं कोष एव वर्तते। कोषे यत्रान्येषां शास्त्राणामुल्लेखो लभ्यते तत्र तस्यापि चर्चा-पृथगेव विहितास्ति। अमरकोष आह—"इतिहासः पुरावृत्तम्" इति। एतेनेदं स्पष्टं सिद्ध्यति यद् इतिहासाभिधो विषयः सर्वथैव भारताभिज्ञातो विषय आसीत्। भारते तस्य लेखनादिकञ्च तथैव प्रावर्तत यथान्येषां विषयाणां लेखनादिकं प्रचलितमासीत्। भारतीये समाजे इतिहासः प्रियतरेषु रुचिकरेषु विषयेषु मतो बभूव। जना इहत्याः उत्सुकतापूर्वकं तत्र स्वकीयां प्रगाढामभि-रुचिं निदधुः। अत एव तु कविकालिदासबाणादिकास्तं सादरं स्मरन्तोऽवा-प्यन्ते। महाकविः कालिदासः अभिज्ञानशाकुन्तले लिखति—"किन्तु यादृशी-तिहासनिबन्धेषु कामयमानानामवस्था श्रूयते तादृशीं तव पश्यामि।" महाक-विर्बाणो लिखति यत्—"चन्द्रापीडः······कथासु, नाटकेषु, आख्यायिकासु, काव्येषु, महाभारतपुराणेतिहासरामायणेषु······कौशलमवाप।" महाभारतेऽस-कृदितिहास इति पदं प्रयुक्तमवाप्यते। वक्ष्यमाणासु पङ्क्तिषु प्रयुक्तम् 'इतिहास' इति पदं पश्यन्तु—

"भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम्" आदिप, १, १९
"इतिहासा सवैयाख्या विविधाः श्रुतयोऽपि च" आदिप, १, ५०
"इतिहासपुराणानामुन्मेषं निर्मितं च यत्" आदिप, १, ६३

एतेन दिङ्मात्रप्रदर्शितेनापि विवरणेन भारतस्येतिहासप्रियत्वं सिद्ध्यति। ज्ञातं स्पष्टतो जायते यदत्रेतिहासस्य लेखनपाठनादिसम्बन्धिनी पद्धतिर्भृशमना-रतञ्च प्रसृतासीत्। एतस्मिन् सत्ये स्थितेऽपि अद्य प्रतीच्येषु प्रधीषु केचन

कथयन्ति यद् भारते इतिहासलेखकानाम् ऐतिहासिकबुद्धेश्च अभाव एव अदृश्यत । इतिहासस्तस्मिन्नेव देशे जनुर्ग्रहीतुं शक्नोति यत्र वक्तृत्वकला समृद्धिमश्नुते; राजनीतिकस्वतन्त्रता न कदापि भारते दृष्टाऽभवत् तस्मात् तत्र वक्तृत्वकलापि नैजजन्मग्रहणस्याप्यवसरं न लब्धुं शशाक । भारते इतिहासानुत्पत्तेः कारणमिदमपि वर्तते यद् भारते न कदापि राष्ट्रियभावना स्वस्य भरणस्य पोषणस्य चानुकूलान्येव साधनानि अधिगन्तुं समर्थाऽभवत् । इतिहासानुद्भवे हेतुरयमपि विज्ञेयो यद् राजनीतिविषयिण्यो घटनाः भारतीयानां जनानां प्रतिक्रियास्तस्मिन्नर्थे नोद्बोधयितुं प्रबभूवुर्यस्मिन्नर्थे यवन ( ग्रीस ) देशोपरि कृतानां पर्शियनीयानामाक्रमणानां प्रतिघातेन हेरोडोटसस्य इतिहासः समुद्भावितः ।

इतिहासमाश्रित्य एतादृश आक्षेपान् विदधाना भारतोपरि, कीथादिका विद्वांसः श्रूयन्ते । नैतेष्वाक्षेपेषु वर्तते सत्यता वस्तुतः । भारते न कदापीतिहासानां न चैतिहासिकबुद्धेरेवाभावोऽभवदित्युपरिष्टान्निहितैः प्रमाणैः साधितमेव । स्वस्य स्वस्य देशस्य समयस्य च दृष्टयो भिन्ना अपि भवन्ति । एतद्दृष्टिवैभेद्यादेव अस्मदीये भारते तस्मिंस्तस्मिन्ननेहसि लिखितानामितिहासानां पद्धतिरपि न देशान्तरीयेतिहासपद्धत्यनुगुणा संवीक्षिता जायते । देशान्तरीया विद्वांसो हि अद्यतना अनद्यतनाश्च इतिहासलेखनस्य तदुद्देश्यं प्रयोजनं वा अनुमन्यमाना न समवाप्यन्ते यदुद्देश्यं प्रयोजनं वा भारतीया मेधाविनोऽनुमेनिरे । भारतीयाः पण्डितास्तिथीनां घटनावलीनाञ्च वर्णनं न इतिहासस्य उद्देश्यमवागच्छन् अपि तु जीवनस्य शाश्वतानां सिद्धान्तानां समुपस्थापनं किञ्च राष्ट्रियसंस्कृतेः समुन्नयनमेव ते इतिहासस्य आदर्शमवजग्मुः । इममादर्शमेव पुरोनिधाय ते इतिहासान् प्राणैषुः । दुर्दैवाद् रामायण-महाभारतादयो ये केऽपि इतिहासा आत्मानं पातुमशकंस्तेषु निर्दिष्टोद्देश्यं स्फुटतया परिवीक्षितं भवति । भारतीयानां प्राचामितिहासकाराणां दृष्टिराधुनिकेतिहासकाराणां लेखनसरणिं कस्मान्नाङ्गीकृतवतीत्यत्र सन्त्यनेकानि कारणानि—( १ ) भारतीया दार्शनिकविचारधारा न ऐहिकमुत्थानं यथार्थमुत्थानं मन्यते । तद्दृष्टौ संसृतिर्निस्सारास्ति; नास्ति तत्र वल्गुता । सांसारिकाणां विषयाणां विचारणं मायाकृते भ्रमानाये एव निपातनमस्ति । ( २ ) पारलौकिकेषु विषयेषु भारतीयाः स्वां श्रद्धामतिचिरादेव गरीयसीमेव निदधानाः प्रेक्ष्यन्ते । ( ३ ) भारतीयानां कर्म-सिद्धान्तो, यन्मतेन मानवजीवने काऽपि अचिन्तनीया घटना घटितुं शक्नोति, ऐतिहासिकघटनानां

सञ्चयने संग्रथने च न मनागपि रुचिमदीदृशत्। (९) भारतीया जातीयेतिहासस्य प्रतिनिधित्वेन राम-कृष्ण-नल-युधिष्ठिरादीन् एव अमंसत।

आश्चर्यमिदं, भारतीयवाङ्मयस्य गम्भीरतया प्रीत्या च अनुशीलने कृतेऽपि सति प्रतीच्याः प्रध्यो भारतीयानां प्रकृतिं प्रवृत्तिं च ज्ञातुं नाशक्नुवन्। "भारतीयेषु इतिहासकाराणामभावस्तत्रैतिह्याभिमतधियोऽभावश्च दृश्येते" इत्येतत तेषामभिधानं तु तद्विषये इममेव सन्देहं जनयति। अस्तु। भारतमप्यवश्यमेव स्वदृष्ट्यनुरूपाणामितिहासानां सृष्टिं चकार। साम्प्रतं प्रामाणिकानामितिहासानां रचना न यदि प्राप्यते तदा तत्र कारणमस्ति-विध्वंसकानामाक्रमणानां बहुलता।

"राजनीतिकस्वतन्त्रता न भारते कदापि दृष्टाऽभवदिति यदुच्यते तदपि न सत्यम्। पुरातनतमे काले तु भारते पूर्णतया राजनीतिकं स्वातन्त्र्यमवर्तत। अस्मिन् विषये—

ध्रुवोऽच्युतः प्रमृणीहि शत्रून्<br>
छत्रूयतोऽधरान् पादयस्व।<br>
सर्वा दिशः संमनसः सध्रीची<br>
ध्रुवायते समितिः कल्पतामिह॥ (ऋक्, १०।१७३)

त्वां विशो वृणतां राज्याय त्वामिमाः प्रदिशः पञ्चदेवीः।<br>
वर्ष्मन् राष्ट्रस्य ककुदि श्रयस्व ततो न उग्रो विभजावसूनि॥ (अथर्व०, ३।४।३)

इत्यादिका मन्त्राः सन्ति प्रमाणभूताः। वैदिके युगे गणतन्त्र-राज्यतन्त्रयोरुभयोरपि दर्शनाच्चेदं सिद्ध्यति यद् भारते राजनीतिकं स्वातन्त्र्यन्तु प्रारम्भादेव वीचितमभूत्। आकरेषु भौज्य-स्वाराज्य-वैराज्य-साम्राज्यादिशासनपद्धतीनां य एष उल्लेखो लभ्यते; कच्चित् तस्योल्लेखनस्यायमेवार्थो भवति यद् भारते राजनीतिकी स्वतन्त्रता नासीत्। भारतस्य यदा दुर्भाग्यमुदितमभवत् तदावश्यमेव बहवो-दोषाः समुदभवन्। परं तत्पतनकालमवलोक्यैव राजनीतिकस्वातन्त्र्याभावविषयकं दोषारोपणं तु नोचितं प्रतिभाति।

यस्मिन् देशे मनु-याज्ञवल्क्य-गार्गी-जनक-वसिष्ठ-बृहस्पतिसदृशा वाग्मिनोऽजनिषत पुरातनतमे काले; किञ्च कृष्ण-सदृशा गीतोपदेशका महाभारतकाले समुदपद्यन्त; अथ च साम्प्रतिकेऽपि भारते शङ्कराचार्यलोकमान्यतिलकसुरेन्द्रनाथ-मदनमोहनमालवीय-सन्निकाशा महावक्तारः समजायन्त तद्-भारतदेशमधिकृत्य

'वक्तृत्वकलाया अत्र अभाव आसीत्' इत्येतत्कथनं कियदनुचितम्। एवमेव राष्ट्रियभावनाया राहित्यमपि यदुक्तं तदपि नानृताद् रहितम्।

यस्य देशस्य श्रुतयः—

"भद्रमिच्छन्त ऋषयस्त्वर्विदस्तपोदीक्षामुपनिषेदुरग्रे।
ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु॥"

(अथर्व० १९।४१।१)

"आ ब्रह्मन् ब्राह्मण ब्रह्मवर्चसी जायताम् आराष्ट्रे राजन्य शूर इषव्योऽतिव्याधी महारथो जायताम्…कल्पताम्।" (यजुषि)

इत्यादिभिर्मन्त्रैः समग्रमपि विश्वं राष्ट्रियभावनामुपदिदिशुस्तदेव भारतं लक्ष्यीकृत्य "न भारते राष्ट्रियभावनानुकूलानि साधनानि समवाप" इत्येतद् भणनं किं युक्तम्?

अस्तु नाम किमपि वैदेशिका वदन्तु। अस्मद्देशे इतिहासानां प्रणयनमितिहासकाराः स्वसंस्कृतिनिर्दिष्टमार्गेणैव अकार्षुः। संस्कृतसाहित्ये न केवलमितिहासा अलिख्यन्त इतिहासप्रधानानि काव्यानि च लिखितान्यभूवन्। बाणभट्टस्य "हर्षचरितम्", वाक्पतिराजस्य "गौडवहो", पद्मगुप्तस्य "नवसाहसाङ्कचरितम्", कल्हणस्य "राजतरङ्गिणी" किञ्च बिल्हणस्य "विक्रमाङ्कदेवचरितम्" इतिहासप्रधानकाव्यत्वेन सन्ति सर्वत्र प्रथितानि। एतेषु ऐतिहासिकेषु काव्येषु अत्र केवलं बिल्हणस्य 'विक्रमाङ्कदेवचरितम्' गृह्यते यतो ह्यत्र तस्यैवैकस्य विमर्शनमिष्टम्।

कश्मीरप्रदेशवास्तव्य-ज्येष्ठकलशात्मजैकादशशतकप्रादुर्भूत—महाकविबिल्हण-प्रणीतमहाकाव्य-विक्रमाङ्कदेव-चरितमस्मदग्रे चालुक्यवंशावतंसस्य वसुधाधिपस्य विक्रमादित्यषष्ठस्य चरित्रं प्रस्तवीति। तत्र तच्चरितं व्यतिरिच्य विक्रमादित्यषष्ठस्य पितुः आहवमल्लस्य निधनं, राजकुमारीचन्द्रलेखोद्वाहः, विक्रमादित्यस्य सोमेश्वर-जयसिंहाभिधानयोर्भ्रात्रोर्व्यतिकरः, चोलानां पराजयः किञ्च अन्याः कतिपयविविधा घटनाः सन्ति कवित्वसमुल्लसितायां मनोऽभिरामायां गिरायां गीताः। काव्ये चालुक्यवंशस्यादिपुरुषो विधातुश्चुलुकादुद्बभूव इत्येतदादावुदीरितम्। काल्पनिकप्रारम्भानन्तरं परम्परायामुच्छेदोऽवाप्यते महान्। बिल्हणः प्रथमं तैलपं नाम नृपतिमवतारयति तत्कृत-राष्ट्रकूटविजयञ्च गायति। अन्येषामनेकेषां भूवल्लभानां तु वर्णनं कृतमेव परं विक्रमादित्यपितुः आहवम-

ल्लस्य विशिष्टतयोल्लेखनं कुर्वाणः स दृश्यते। यद्यपि कविना वहुलास्तादृश्यो घटनाः स्वकाव्ये वर्णिता यादृश्यी हि पुरावृत्तोपरि प्रकाश-क्षेपणे नितान्तं सहायका भवन्ति परं यत्र कविः स्वनायकगुण-गौरवानुरागामितवशात् तस्योत्कर्ष-प्रदर्शन एव पूर्णं मनोयोगं प्रददाति, तत्र एवंविधायाः घटनाया घटनमवलोक्यते यां न केचन इतिहासाः परिपोषयन्ति। परं साम्प्रतिके समये वहव इतिहासलेखकाः देश-जाति-सम्प्रदायादिपक्षपातहेतोः स्व-स्वेतिहासे अतीतानां घटनानां वर्णन-मतिविपर्यासपूर्वकं विदधाना दृष्टा भवन्ति एतादृश्यां स्थिताविदमपि मुक्तकण्ठ-तया कथनं न समीचीनं प्रतिभासते यत् कविरमुकां घटनामसत्यामेव वर्णयामास।

अस्ति विक्रमाङ्कदेवचरिते वीररसः अङ्गी। तत्र सर्वत्रैव वहूनां युद्धानां वर्णनं विलोकितं भवति। यद्यपि कविना काव्ये सर्वत्र वैदर्भी रीतिरवलम्बितास्ति परं यत्र यत्र श्लोके वीरतायाः, सेनायाः, समरस्य च दृश्यं कविना आलिखितं तत्र तत्र श्लोके वीररसानुकूला पदावली वीक्ष्यते;, सैन्यसमूहस्य वर्णनाय कवि-लेखनी यत्कौशलमभ्युपगच्छति तत्कौशलसामर्थ्यात् पाठकाः स्वसमक्षे सैन्यं सन्तिष्ठ-मानमिव प्रेक्षन्ते। तेषां श्रोत्रेन्द्रियं दुन्दुभि-ध्वनिं श्रोतुमारभते; कुञ्जराणां भारेण नीचैर्गच्छन्तीं पृथिवीं तेषां नयनेन्द्रियं विलोकयितुं सुसमयमश्नुते; तुरङ्ग-खुरोत्थापितं क्षमा-रजोदिग्भागान् आवृण्वत्; गजमदाम्बुभिर्धराभार्द्रां भवन्तीं च ते लोचनगोचरीं कर्तुमवसरं लभन्ते। सैनिकानां प्रमाथः, शस्त्रास्त्राणां भीषण-शब्दप्रकटनपूर्वकं विद्युत्प्रभानुकारी प्रस्फुरत्प्रकाशः, समन्तादपसर्पत्तुमुलहेला-कोलाहलः, झणझणेति शब्दं कुर्वतां रथानां पङ्क्तयः; हयानां गजानां पदातीनां परमभयोत्पादिनी श्रेणी च पाठकस्य श्रोतुर्वा पुरो युगपदवतीर्णा जायन्ते।

राजा आहवमल्लः कीदृशो महानुद्भटो योद्धासीत् इत्येतत्—तथ्यं कविः कियद्वीरतोद्ग्रथितायामुत्साहादम्योत्पादिकायां कातरस्यापि शोणिते उष्णतायाः सञ्चारिण्यां भाषायां सन्निदधातीति विलोक्यतां क्षणम्—

कौक्षेयकः क्ष्मातिलकस्य यस्य पीत्वातिमात्रं द्विषतां प्रतापम्।
आलोक्य वाष्पाम्बुमिराचचाम चोलीकपोलस्थलचन्दनानि॥ ११९०॥
दीप्रप्रतापानलसन्निधानाद् विभ्रत् पिपासामिव यत्कृपाणः।
प्रमारपृथ्वीपतिकीर्तिधारां धारामुदारां कवलीचकार॥ ११९१॥
निःशेषनिर्वासितराजहंसः खड्गेन बालाम्बुदमेचकेन।
भोजक्षमाभृद्भुजपञ्जरेऽपि यः कीर्तिहंसीं विरसीचकार॥ ११९२॥

सूर्यसदृशस्य जयसिंहदेवस्य प्रचण्डारातीनामपि मानसे सन्तापसमुत्पादकं प्रतापं कविरेवं वर्णयति—

प्रतापभानौ भजति प्रतिष्ठां यस्य प्रभातेष्विव संयुगेषु।
सूर्योपलानामिव पार्थिवानां केषां न तापः प्रकटीबभूव॥ ११८१॥
यात्रासु यस्य ध्वजिनीभरेण दोलायमाना सकला धरित्री।
आर्द्रत्वगाधिष्ठित - पृष्ठपीठमकर्मठं कूर्मपतिं चकार॥ ११८२॥

शब्दावल्यां कियदोजः कियती विकटता कियांश्च दारुणो रसो विभ्राजते। सम्प्रति समराङ्गणे हतानां भूपानां हृत्कम्पनकृद् दृश्यं दृश्यतां किञ्च कविना तद् दृश्यं कियद् विलक्षणचातुर्येण प्रदर्शितं तदपि विलोक्यताम्—

किरीटमाणिक्य-मरीचिवीचिप्रच्छादिता यस्य विपक्षभूपाः।
चिताग्निभीत्या समराङ्गणेषु न संगृहीताः सहसा शिवाभिः॥ ११८३॥

काव्यनायको विक्रमाङ्कदेवः शैशवादेव समरोत्सवोत्कण्ठो दृष्टो बभूव। आहवमल्लदेवस्तदीयः पिता अद्भुतसाहसाङ्कमेकवीरं तमेव सिंहासने प्रतिष्ठापयितुं मनसाचकाङ्क्ष। स राजलक्ष्म्याः संरक्षणं तस्यैवातुलसत्त्वस्य भूभारधारणक्षमयोर्भुजयोर्विशश्वास—

"अलङ्करोत्स्यद्भुतसाहसाङ्कः सिंहासनं चेदयमेकवीरः।
एतस्य सिंहीमिव राजलक्ष्मीमङ्कस्थितां कः क्षमतेऽभियोक्तुम्॥" ३।२७॥

विक्रमाङ्कदेवो बहुसंख्याकान् महासमरान् जितवान्। आसीदसौ त्रिलोकवीरः—

"त्रिलोकवीरः कियतो विजिग्ये न दुर्दमानां प्रतिपार्थिवानाम्।
दोर्विक्रमेणाद्भुतसाहसेन महाहवानाहवमल्लसूनुः॥ ३।६८॥

महोद्धुराणां महेभानां रणप्रचण्डानां तुरङ्गमानां जितनानासम्परायाणां महाभटानामपि पराङ्मुखकारिणः शत्रुप्रलयपवनस्य सम्मुखे गन्तुं विक्रमाङ्कदेव एव शक्तिं निदधौ—

"उदतिष्ठदपारपौरुषः स्वयमुद्दाममदेन दन्तिना।" १५।१८
"असिना विशिखैः सतोमरैः सहसा कुञ्जरघातनेन च।
स सहस्रमिवोद्वहन् करान् प्रतिपक्षक्षयदीक्षितोऽभवत्" ॥१५।६४॥

महाकवौ विल्हणे अद्भुतैव भयङ्करसमरवर्णनपटीयस्कता समुच्छलति। तस्य लेखन्यां तदमोघं बलं सञ्चरते यत् सर्वत्र शोणितापगानां रोमाञ्चकृत् तद्दृश्यमुत्पादयितुं प्रभवति यदवलोक्य कालस्यापि हृदये हठाद् भीतिः प्रवेष्टुं प्रधावति

"महाभटानां करवालयष्टयः समुच्छलद्वीररसोर्मिनिर्मलाः ।
विनिर्गताः कोशविलोदरात् ततः कृतान्तपाशोरगसंनिभा बभुः" ॥१७।४५॥
"पदे पदे शोणितपङ्कपातिनी दिनेश्वरस्य प्रतिबिम्बमालिका ।
अवापदापानकुतूहलागतक्षपाचरस्त्रीचषकोपमेयताम्" ॥ १७।५२ ॥

इदं विक्रमाङ्कदेवचरितं महाकाव्यं चालुक्यवंशोद्भवं वर्णयत् वीक्ष्य, तद्वंशोद्भूत-प्रचण्डपराक्रमपेशलपार्थिवानां वृत्तं च तत्र समवाप्य डॉ० बूह्लरादयो अचकथन् यन्महाकविना स्वकृतावैतिहासिकं तथ्यं वितथीकृतम् । परं दूषणमिदमत्रापातत एव प्रतिभाति न तत्त्वदृष्ट्या । प्रकृतकृतिरितिहासमूलापि काव्यमेव नेतिहासः । अत्र महाकविबिल्हणस्य प्राधान्येन कवित्वमेव प्रकाशनीयं वर्तते न चेतिहासतत्त्वम् । यत्त्वत्रेतिहासतत्त्वमाविर्भावितं तदानुषङ्गिकत्वेन न प्राधान्येन कविना चेदत्र काव्ये स्वनायकस्य किमपि अनुचितं वृत्तं निह्नुतं तदा तत्तु समुचितमेव कृतं । कविं—

"यत् स्यादनुचितं वृत्तं नायकस्य रसस्य वा ।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत् ॥"

इत्येषा हि शास्त्राज्ञा आज्ञापयति ।

वस्तुतः काव्यमेतत् स्वकीयतत्तद्गुणहेतोः संस्कृतसाहित्येऽसाधारणमेव स्थानमधितिष्ठति । एतस्याभिनन्दनीयस्य काव्यस्य प्रणेता बिल्हणोऽस्ति विलक्षणकाव्यविच्छित्तिप्रकाशनप्रवणो विचक्षणवरोऽनल्पमधुरमञ्जुलकल्पनाकुशलः । प्रसादाभिधेन गुणेन वैदर्भ्याख्यया मनोज्ञया रीत्या चैष कविः काव्यनिर्माणे कविकुलगुरोः कालिदासस्य शैलीं बिभर्ति । रस-ध्वनिच्छन्दःसमासोक्त्यादिभिः सर्वथैव सनाथीकृत्य काव्यमिदं कुशलमहाकविना श्रीसरस्वतीचरणसरसिजयोः सादरं सविनयञ्च समर्पितम् । वस्तुतः कविना विरचय्येदं काव्यरत्नं संस्कृत-साहित्यसंसारस्य गरिमा महिमा च नितरामेव वृद्धिं नीतौ ।

काव्येऽस्मिन् उपमातिशयोक्त्यर्थान्तरन्यासकाव्यलिङ्गार्थापत्तिप्रभृतयोऽलङ्कारास्तु सन्त्येव बहवः परमेतस्य काव्यस्य मध्ये उत्प्रेक्षालङ्कारस्य तु अतितरामेव मनोहरा लोकोत्तरसौन्दर्यशालिनी माला दृष्टिगोचरीभवति । इह कतिपये श्लोकास्तदीयश्रीपर्यवेक्षणाय निधीयन्ते—

यस्येषवः संयुगयामिनीषु प्रोतप्रतिक्ष्मापतिमौलिरत्नाः ।
गृहीतदीपा इव विन्दते स्म खड्गान्धकारे रिपुचक्रवालम् ॥ १।७५ ॥

इह कविनाऽनुस्यूतराजमौलिरत्नेषु शरेषु गृहीतदीपकत्वमुत्प्रेक्षितम् ।

यद्वैरिसामन्तनितम्बिनीनामश्रान्तसन्तापकदर्थ्यमाने ।

पराङ्मुखं शोषविशङ्कयेव कुचस्थले कुङ्कुमपङ्कमासीत् ॥ ११०५ ॥

अत्र कुचस्थले कुङ्कुमलेपस्य पराङ्मुखत्वं स्तनयोः शोषशङ्काया हेतुत्वेनोत्प्रेक्षितम् ।

यं वीक्ष्य पाथोधिरधिज्यचापं शोणाश्मभिः शोणितशोणदेहैः ।

क्षोभादभीक्ष्णं रघुराजबाणजीर्णव्रणस्फोटमिवाचचक्षे ॥ ११२०९ ॥

अत्र रक्तपाषाणेषु जीर्णव्रणस्फोटत्वमुत्प्रेक्षितम् ।

एवंविधाभिर्मधुरमधुराभिरुत्प्रेक्षाभिः काव्यमेतन्नितरां विभूषितं सद् भृशं सचेतसां चेतांसि चोरयति ।

सम्प्रति अन्येषां च त्रिचतुराणामलङ्काराणां छविं प्रेक्षन्ताम्—

"भोजक्षमापालविमुक्तधारानिपातमात्रेण रणेषु यस्य ।

कल्पान्तकालानलचण्डमूर्तिश्चित्रं प्रकोपाग्निरवाप शान्तिम्" ॥ ११९४ ॥

अत्र विरोधाभासः;

"ध्रुवं रणे यस्य जयामृतेन क्षीवः क्षमाभर्तुरभूत् कृपाणः ।

एका गृहीता यदनेन धारा धारासहस्रं यशसोऽवकीर्णम्" ॥ ११९६ ॥

इह परिवृत्तिः श्लेषश्च;

"अन्यायमेकं कृतवान् कृती यश्चालुक्यगोत्रोद्भववत्सलोऽपि ।

यत्पूर्वभूपालगुणान् प्रजानां विस्मारयामास निजैश्चरित्रैः ॥ ११०१ ॥

इह व्याजस्तुतिश्च सहृदयान् प्रीणयन्ती स्वशोभां सर्वतो विकिरति । साम्प्रतं ध्वनि-रमणीयतापि विलोकनीया—

"सोऽयं रणे नर्तयिता कबन्धान् मदान्धभूपालसहस्रसेव्यः ।

विलोक्यतां सुन्दरि चेदिराजस्तवास्तु दृष्टिः स्मरवैजयन्ती" ॥ ९१९५ ॥

अत्र कबन्धनर्तनकारित्वेन शौर्यातिशयरूपवस्तु ध्वनितम्;

"उत्तम्भयामास पयोनिधेर्यस्तीरे जयस्तम्भमसदृम्भवोरः ।

असूयितं स्वैरविहारशीलैरालानभीत्या जलवारणेन्द्रैः" ॥ ११११ ॥

इह जयस्तम्भे समुद्रगजानामालानस्य भ्रान्त्याऽसूयेति प्रतीत्या भ्रान्तिमानलङ्कारो व्यङ्ग्यः ।

"उत्थाय मन्युवशतश्चलितुं प्रवृत्ताः
कर्णं गते झटिति कुक्कुटकण्ठनादे।
किञ्चित्स्तुतादिनिभमात्रमुदार्थनार्यः
प्राणेशकेलिशयनेषु पुनः पतन्ति ॥ ११।९३ ॥

इत्येवंविधेषु श्लोकेषु अधरीकृतसुधं रसं निपीय परामेव तृप्तिमवाप्नुवन्ति भावुकाः।
काव्ये—"आलवालवलयस्थितिभाजां बन्धवः सरसरागलतानाम्।
हैमपात्रनिवहप्रणयिन्यः पाटलाः शुशुभिरे मधुधाराः ॥" ११।२६
"यामिनीदयित कामपि कान्तां दुर्लभामभिलपन् भुवनेऽपि।
तानवं किमपि तन्तुसमानं मानहीनविदितः परमार्थः ॥" ११।५९

इत्येतादृशाः शतशः श्लोकाः माधुर्यगुणमुद्वहन्तः समवाप्यन्ते। कविर्माधुर्ये प्रसादे च गुणे प्रतिपदं महाकविं कालिदासं स्मारयति। एतावदेव न तल्लालित्यं क्वापि दण्डिनः, क्वापि च जयदेवस्य, क्वापि च श्रीहर्षस्य लालित्यमपि जयदिव प्रतिलक्ष्यते। वसन्तादिकानामृतूनां वर्णनन्त्वेतदीयं माघादिकविकृततद्वर्णनेऽपि क्वचित् क्वचिदरुचिमुत्पादयत् किं वा रुचिं परिग्लापयत् प्रतीयते—

"उन्मादयन्मधुपेन पुष्पमधुना केलीभुवः पङ्किलाः
सर्वे भङ्गभयं दिशन्ति कुसुमप्राग्भारतः पादपाः।
चैत्रेणास्त्रपरम्पराव्ययविधौ दैन्यं परित्याजितः
कामः सम्प्रति बाणमोचरसिको लक्ष्येष्वलक्ष्येषु च ॥" ७।७२

"कूजत्कोकिलकोपिता गुलिधनुःशिक्षां समासेवते
खिन्ना चन्दनमारुतेन मलये दावाग्निमाकाङ्क्षति।
किञ्चान्विष्यति दुर्मना दलयितुं कामेन मैत्रीं मधोः
कर्तुं धावति दुर्लभे त्वयि सखी कां कां न वातूलताम् ॥" ७।६६

सूर्यास्तः कविनोत्प्रेक्षाकदम्बकैर्नितरामेव हृद्यतया वर्णितः। तत्र स मधुरमुपदिशन्नपि दृश्यते—

"मज्जतः पयसि पश्चिमसिन्धोः स्निग्धमम्बरतलं परिरभ्य।
भास्वतस्त्वविमुक्तमसूर-लोदपाटलमलक्ष्यत धाम ॥" ११।२

कवेरुपमाम्प्रति च दृष्टिरत्र देया।

"प्रार्थनार्थमिव रत्नरुचीनां भानुरब्धिमगमद्गतकान्तिः।
सत्त्वमुन्नतपदात्पतितानां विद्यते न महतामपि न्यूनम् ॥" ११।४

इहार्थान्तरन्यासमालम्ब्य यदुपदिशति कविस्तत्रापि ध्यानं प्रदेयम्।

काव्ये कविः स्थाने स्थाने सन्निवेशिताभिः सूक्तिभिः स्वकीयान् पाठकान् प्रति न केवलं सन्मार्गं प्रदर्शयत्यपि त्वसौ स्वप्रकृति-परिचयमपि प्रददाति; स एतदपि ज्ञापयति यत्स तेषु तेषु भावेषु विचारेषु वा अभिरुचिं निदधाति। कवि-निहितानां सूक्तीनां महोपकारत्वादिहापि त्रिचतुरा एव सूक्तयो निधीयन्ते—

(क) "इयं हि लक्ष्मीर्धुरि पांसुलानां केषां न चेतः कलुषीकरोति" ३, ४२

(ख) "न कृच्छ्रेऽपि महाभागास्त्यागव्रतपराङ्मुखाः" ४, ६७

(ग) "यशसि रतिर्महतां न देहपिण्डे" ६, ७७

(घ) "प्रायेण देहविरहादपि दुःसहोऽयं
सर्वाङ्गसंज्वरकरः प्रियविप्रयोगः" १६, ४०

अस्य कवेर्नवमसर्गस्थं स्वयंवरवर्णनं कालिदासवर्णितेन्दुमतीस्वयंवरं तु संवदत्येव अन्या अपि एतदीया उक्तयस्तत्तत्कव्युक्तीः संवदन्त्यः प्राप्यन्ते। तथाहि—

"लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम्।
सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे॥" (रघु०, १, ६९)

"किमश्वमेधप्रभृतिक्रियाक्रमैः सुतोऽस्ति चेन्नोभयलोकबान्धवः।
ऋणं पितॄणामपनेतुमक्षमाः कथं लभन्ते गृहमेधिनः शुभम्॥" (वि० २, ३४)

"अब्धिषु स्थलपथीकृतेषु नः पूर्यते जयविधौ कुतूहलम्।
इत्यकुर्वत दिगन्तगोचरं नूनमस्य तुरगाः क्षमारजः॥" (वि०, १४, ६२)

"प्रयातुमस्माकमियं कियत्पदं धरा तदम्भोधिरपि स्थलायताम्।
इतीव वाहैर्निजवेगगर्वितैः पयोधिरोधक्षममुत्थितं रजः॥" (नै०, १, ६९)

वस्तुत इदं काव्यं संस्कृतकाव्येषु नैजं विशिष्टं महत्त्वं निदधाति। यस्यापि दृष्टिपथे काव्यमेतत्समागच्छति स काव्यमिदमधीत्यातितरां प्रीयते। पाठकस्याग्रे काव्यमे-तदेकतस्त्वैतिहासिकीः घटनाः सन्निदधात्यपरतः कवित्वलक्ष्मीमतः काव्यस्यास्य-कर्ता बिल्हणः स्वपाठकं यथा परिप्रीणाति न तथाऽन्ये कवयः। एतत्कृताश्चौरपञ्चाशिका-कर्णसुन्दरी-विक्रमाङ्काभ्युदयाख्यचम्पूकृतयश्च रसिकानां मानसेषु हर्षम-मितं सञ्चारयन्ति। सुभाषितसंग्रहप्रबन्धेष्वपि एतद्-रचिता अनेके श्लोकाः संल-भ्यन्ते। सत्यमुक्तम्—

"बिल्हणस्य कवेः प्राप्तप्रसादैव सरस्वती।
नीयते जातु कालुष्यं दुर्जनैर्न घनैरपि॥"

—०—

## नैषधं विद्वदौषधम्

अमरवाणीसाहित्यसुधीशिरोरत्नविश्वविदितयशा नैषधीयचरितमहाकाव्यरचयिता कविचक्रचूडामणिस्तार्किकजगदलङ्कारो लोकोत्तरप्रतिभापावनः श्रीहर्षो महाकविर्ललितपदनिबन्धनावाप्तविचित्रचातुरीकश्चमत्कारचारुताचुम्बितार्थप्रकाशनपण्डितो वैदुष्यातुलविभावितनिबन्धप्रणयननिपुणः शास्त्रीयस्य पाण्डित्यस्य कवित्वस्य चानुपम एव रत्नाकरो बभूव ।

स यथा मानसमञ्जरीसमुन्मीलनविधायिन्याः प्रकृतिपेशलायाः कविताया विरचने परां प्रवीणतामगाहत तथैव पण्डितप्रकाण्डमदचूर्णनचतुरायास्तर्ककार्कश्यकर्कशाया गिराया गुम्फनेऽपि अद्भुतामेव विदग्धतां बभाज । यो हि श्रीहर्षः कविता-कामिनीकरलीलाकमलभूतं नैषधीयचरितमररचत् स एव श्रीहर्षः प्रगाढपाण्डित्यभुजदण्डखड्गभूतं खण्डनखण्डखाद्यमपि अजग्रन्थत् । यः श्रीहर्षो मनोऽभिरामया कान्तकवितया कश्मीरेषु स्वीयां विमलां समज्ञावैजयन्तीमुदतूतुलत् स एव जयचन्द्रकान्यकुब्जनरेन्द्रसंसदि स्वपितृपादपराजेतुस्तार्किकतल्लजस्योदयनस्यापि वैदुष्यजनितमदमपि अचुचूर्णत् । कविकुलपारावारपौर्णमासीन्दोः श्रीहर्षस्येयमुक्तिर्नितान्तमवितथैव—

> "साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
> तर्के वा मयि संविधातरि समं लीलायते भारती ।
> शय्या वास्तुमृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
> भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ॥"

श्रीहर्षो न केवलं कविर्दार्शनिको वा बभूव स महान् साधको योगी च भूत्वा भुवि बभौ । चिन्तामणिमन्त्रसिद्धिः सरस्वतीमातृवरसमवाप्तिश्च तस्य साधकत्वे योगित्वे च समुज्ज्वलं प्रमाणम् । संस्कृतकवीनां मध्ये हि एवंविधाः कवयो नाधिका यत्र कवित्वयोगित्वयोर्मञ्जुलो योगः परिस्फुरन् प्रेक्ष्येत ।

अद्वैतसिद्धान्तनिहितरुचिविशेषो महाकविर्दार्शनिकसिद्धान्तप्रतिपादने व्यङ्ग्यवर्तीं सरणिं संश्रित्य दर्शनविदां संसारेऽमितां मुदं वितन्वानो राजते । तदीयो हि नैषधीयचरितस्थः सप्तदशः सर्गो दर्शनशास्त्रविषयकवैदुष्यस्य

निकपोपलः सन् शोभते। चार्वाकमतस्य तत्र मण्डनं खण्डनञ्च एतावत्या प्रौढत-रतयानुष्ठितं यदसौ सर्गो दर्शनशास्त्रमिव प्रतीयते। चार्वाकाननेन ये विचारास्तत्र कविना प्रतिष्ठापितास्तेऽद्यतनानामपि भौतिकवादिनां तर्कान् सिद्धान्तांश्च परिह-सन्तः प्रतिलक्ष्यन्ते। चार्वाकमतानुगामिनः सन्ति प्रत्यक्षप्रमाणमात्रसभाजनपराः। न तेषु अनुमानस्य सम्मानं न च शब्दस्य। तन्मतेन चैतन्यविशिष्टं संहननमेव आत्मा, मरणमेव मोक्षः, न क्वापि स्वर्गो न च क्वापि परमेश्वरः।

"यावज्जीवेत् सुखं जीवेदृणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥"

इत्येष तेषामुद्घोषो लोकविदित एव। कविः श्रीहर्ष एतान् एव नास्तिकदर्शनस-म्बन्धिनः सिद्धान्तान् कीदृश्या प्रवाहवत्या मनोविनोदिन्या रीत्या समुपस्थापय-तीति प्रेक्ष्यताम्—

"कः शमः क्रियतां प्राज्ञाः प्रियाप्रीतौ परिश्रमः।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥
स्वं च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम्।
इति स्वोच्छित्तिमुक्त्युक्तिर्वैदग्धी वेदवादिनाम्॥
अग्निहोत्रं त्रयी तन्त्रं त्रिदण्डं भस्म पुण्ड्रकम्।
प्रज्ञा-पौरुषनिःस्वानां जीवो जल्पति जीविका॥"

मोक्षे सुखस्याभाव इत्येतत्प्रतिपादकं गौतमं कविः कीदृश्या वक्रोक्त्योपहसतीति वीक्ष्यताम्—

"मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।
गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः॥"

नैयायिकानामीश्वरवादिताविधायां कविवरस्याक्षेपप्रकारो विलोक्यताम्—

"देवश्चेदस्ति सर्वज्ञः करुणाभागवन्ध्यवाक्।
तत् किं वाग्व्ययमात्रान्नः कृतार्थयति नार्थिनः॥"

दानधर्मस्य वैयर्थ्यप्रतिपादनपरायां कयेरुक्त्यां दृग् दृष्टिः क्षिप्यताम्—

"किं वित्तं दत्त तुष्टेयमदातरि हरिप्रिया।
दत्त्वा सर्वं धनं मुग्धो बन्धनं लब्धवान् बलिः॥"

दर्शनं यदि किमपि सद्वादि तु अपरमस्ति असद्वादि, तदितरं तु सदसद्वादि। तदेवं दर्शनानि भिन्नभिन्नान्येव मतानि प्रतिपाद्य जनानां मतिं भ्रमे पातयन्ति।

अद्वैतवादिवेदान्तदर्शनं तु वादचतुष्टयादपि भिन्नां पञ्चमीं कोटिमवलम्बते । कविस्तामेवाधः स्थिते श्लोके प्रस्तवीति—

"साम्युं प्रयच्छति न पक्षचतुष्टये तां
तल्लाभशंसिनि न पञ्चमकोटिमात्रे ।
श्रद्धां दधे निषधराड्विमतौ मताना-
मद्वैततत्त्व इव सत्यतरेऽपि लोकः ॥"

कवेर्भवत्युपहासोऽतितरामेव मनो मर्मभागस्पृक् । प्रियोपहासस्य तस्य रुचेर्लक्ष्यं क्रिन्त्वास्ते गम्भीरा शास्त्रचर्चा । स्वकीययानया प्रक्रियया रहस्यमेवोद्घाटयितुमीहते सततम् । दृश्यताम्—

"भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं
पदप्रयोगाध्वनि लोक एषः ।
शशो यदस्यास्ति शशी ततोऽय-
मेवं मृगोऽस्यास्ति मृगीति नोक्तः ॥"

अत्र व्याकरणाज्जगद्व्यवहारस्य गरीयस्कतां कविर्विलक्षणेनैव विधिनोपपाद्य वैयाकरणान् कीदृश्या ललितया व्यंग्यगिरया परिहसति ।

सकलेष्वपि दर्शनेषु कवेर्गतिरप्रतिहतैव अदृश्यत । सांख्ययोगदर्शनपाटवं प्रति तदीयः श्लोक एष सङ्केतयति—

"क्षणनीरवया यया निशि श्रितवप्रावलियोगपट्टया ।
मणिवेश्ममयं स्म निर्मलं किमपि ज्योतिरवाह्यमिज्यते ॥"

इत्यत्र 'योगी आश्रितयोगपट्टोऽविद्यादिदोषरहितं किमपि वाङ्मनसयोरविषयमात्मलक्षणं ज्योती रात्रावुपास्त' इति सांख्ययोगविषयिणीं वार्तां नगरीवर्णनव्याजेनाभिव्यनक्ति कविः । स्वकीयाया मीमांसाभिज्ञताया दिशि कविरधःस्थितेनश्लोकेन सचेतश्चेत आवर्जयितुमभिलषते—

"इष्टं नः प्रति ते प्रतिश्रुतिरभूद् याद्य स्वराह्लादिनी
धर्मार्थी सृजतां श्रुतिस्मृतिभटी कृत्यान्विताख्यापदाम् ।
स्वत्कीर्तिः धुनती एनस्त्रिभुवनं शुभ्राद्वयादेशनाद्
द्रव्याणां शितिपीतलोहितहरिन्नाज्ञान्वयं लुम्पतु ॥"

इत्यत्र कर्मप्रतिपादिका श्रुतिर्यागमुद्दिश्य प्रवर्तते । सा विधित्वेन यत् प्रतिपादयति तदेव धर्म इत्युच्यते । मीमांसा श्रुत्युक्तं धर्ममेव विविनक्ति । सा तदेव

कर्म कर्मत्वेनानुमन्यते यदृहि्त श्रुतिसम्मतम् । तस्मात् सा 'चोदनालक्षणार्थो धर्मः' इत्येतेन सूत्रेण धर्मं लक्षयन्ती जगतीं कर्माचरितुं नुदति । 'अङ्गीकृतं सुकृतिनः परिपालयन्ती'त्येतत्कथनीयं कथनं च मीमांसादर्शनसिद्धान्तप्रदर्शनपूर्वकं कविः प्रकटीचकार । एषा चमत्कारचारुता इह वीक्षिता भवति सम्यक् ।

"न्यवेशि रत्नत्रितये जिनेन यः
स धर्मचिन्तामणिरुज्झितो यया ।
कपालिकोपानलभस्मनः कृते
तदेव भस्म स्वकुले स्तृतं तया" ॥

इत्येतस्मिन् श्लोके 'रत्नत्रितयेन' इत्येतदाम्नाय कविः स्वस्य बुद्धदर्शनप्रावीण्यं प्रदर्शयति । वक्ति च स यद् बुद्धोपदिष्टं सम्यग्दर्शन–सम्यग्ज्ञान–सम्यक्चारित्र-लक्षणरत्नत्रितयं न हेयम् । कलिनाशनदमयन्तीनलकीर्तनापदेशेन नानाविधं नैजं ज्ञानमाकलय्य स्वकाव्यामृतपानपरायणान् जनान् अपि तत्तच्छास्त्रीयज्ञानेन परिप्रीणयितुमुत्सहते ।

"ध्वान्तस्य वामोरु विचारणायां
वैशेषिकं चारुमतं मतं मे ।
औलूकमाहुः खलु दर्शनं तत्
क्षमं तमस्तत्त्वनिरूपणाय ॥

इत्येतेन श्लोकेन कविरेकतस्तु स्वीयं वैशेपिकदर्शननैपुण्यं निदधात्यपरतोऽसौ 'औलूक'मित्येतेन पदेन वैशेपिकदर्शनमप्युपहसति मनोरञ्जनपूर्वकम् ।

महाकवेः श्रीहर्षस्य नैपधीयं चरितं कलापक्षपातिनां काव्यानां शिरोमुकुटमणिः । परं कलालीलाविलासानां केलिकुञ्जत्वे सत्यपि तस्य कलावादिकाव्यान्तरमिव न सौगम्येन तत् सहृदयबुधबोधगम्यम् । तदीयं रसं सौन्दर्यञ्च स एवोपभोक्तुं क्षमते यो भावुकः सन् शास्त्रार्थतत्त्वावगमक्षमनिशितप्रतिभावान् महान् मेधाव्यपि वरीवर्ति । स्वकाव्यस्य काव्यान्तरालब्धवैशिष्ट्यं स्वयमेव कविरामनति—

यथा यूनस्तद्वत् परमरमणीयापि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥

आदिमारभ्य अन्तं यावद् यावन्तोऽपि श्लोका अत्र उल्लसन्ति तावत्सु सकलेष्वपि ललितानां पदानां रमणीयं निबन्धनं विभाति। परं तेषु ललितपदावल्येव न तत्र विलक्षणं पाण्डित्यमपि वितनुते। नानाशास्त्रतत्त्वतरलत्वात् धीप्रयासकारिशब्द-परिपूर्यमाणत्वाच्च ते ललिता अपि श्लोकाः प्रतिभाशालिनां शास्त्रिणां समुदायमेव नितरां प्रीणयन्ति। सामान्यधियः पुमांसो न ततः सर्वाङ्गीणतया पूर्णमानन्दमा-स्वादयितुमर्हन्ति। पद–लालित्यशोभा अस्य काव्यस्य क्षणमवलोक्यताम्—

"तत्रावनीन्द्रचयचन्दनचन्द्रलेप-
नेपथ्यगन्धवहगन्धवहप्रवाहम्।
आलीभिरापतदनङ्गशरानुसारी
संरुध्य सौरभमगाहत भृङ्गवर्गः॥"

"देवी पवित्रितचतुर्भुजवामभागा
वागालपत् पुनरिमां गरिमाभिरामाम्।
अस्यारिनिष्कृपकृपाणसनाथपाणेः
पाणिग्रहादनुगृहाण गणं गुणानाम्॥"

यथैतस्मिन् चारुणि काव्ये प्रतिपदं ललितं तथैव काव्यस्यास्य प्रतिश्लोकमलङ्का-राणां सुषमा विलोकिता भवति परं तेषां तेषामलङ्काराणां सौरस्यमपि पातुं प्रधीत्वमपेक्ष्यते। द्वित्राः श्लोकाः काव्यस्यास्यालङ्कारप्रियत्वं ज्ञापयितुं निधीयन्ते—

"कलसे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः।
स तदुच्चकुचौ भवन् प्रभाझरचक्रभ्रमातनोति यत्॥"

इत्येष श्लोकोऽनुमानरूपकभ्रान्तिमदुत्प्रेक्षाविरोधाभासालङ्कारैरलङ्क्रियमाणोऽस्ति। परं यावदेतस्य श्लोकस्यार्थावधारणा न भवति तावत् तत्तदालङ्कारच्छटाचमत्कारो न हृदयनयनं प्रमोदयितुमलम्।

"अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि।
श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते॥"

इत्यत्र वचनश्लेषक्रियाकारकदीपकतुल्ययोगितालङ्काराणां रुचिरता प्रस्फुरतितराम्। परमत्रापि अलङ्कारशास्त्रस्य सूक्ष्मज्ञानमन्तरेणालङ्कारजनितं माधुर्यं न सुलभमेव-मेवेह कविप्रयुक्तात् 'व्यतिभाते' इत्येतस्मात् पदाद् व्याकरणविषयकं सौन्दर्यमपि स एवास्वादयितुं क्षमेत योऽस्ति वैयाकरणः।

अधः स्थिते श्लोके समासोक्तिश्रियं प्रेक्षन्ताम्—

नवा लता गन्धवहेन चुम्बिता
करम्बिताङ्गी मकरन्दशीकरैः ।
दृशा नृपेण स्मितशोभिकुड्मला
दरादराभ्यां दरकम्पिनी पपे ॥

कवेः काव्यमिदं परमरसणीयम् । तत्र साहित्यिकानां सर्वस्वं ध्वनिः स्वेन गुणालङ्कारादिजित्वरेण अधरीकृतामृतमाधुर्येण माधुर्येण रसिकानां निकरं मुहुर्मुहुर्धिन्वन् विद्योततेतराम् ।

"एतं नलं तं दमयन्ति पश्य त्यजार्तिमित्यालिकुलप्रबोधान् ।
श्रुत्वा स नारीकरवर्तिसारीमुखात् स्वमाशङ्कत यत्र दृष्टम् ॥"

इत्येतादृशानां श्लोकानां बाहुल्यं तत्र विभाति यद् अलङ्कारध्वनेः शङ्काप्रभृति विविधभाव–संस्फुरणस्य श्रिया सुधीसमाजं प्रीणाति भृशम् । प्रकृते श्लोक इह सारीवाक्ये नारीवाक्यभ्रमाद् वस्तुना भ्रान्तिमदलङ्कारो व्यज्यते ।

वस्तुध्वनेः सौन्दर्यं दर्शयितुं कविवरेण्यस्य श्लोकोऽयमीक्ष्यताम्—

"अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिझरैरगाधताम् ।
स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥

अत्र हि कुचयोः स्मरयौवनप्लवनकुम्भत्वोत्प्रेक्षया तयोरौत्कट्यं कुचयोश्चातिवृद्धिर्व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ।

श्लेषे कवेर्मनोवृत्तिर्नितरां प्रायेण सर्वत्रैव रममाणा वीक्ष्यते परं त्रयोदशे सर्गे सा वृत्तिः स्वकीयं श्लेषविषयकमनुरागं प्रकृष्टतरतां नयन्ती पर्यवेक्षिता भवति ।

"देवः पतिर्विदुषि नैषधराजगत्या
निर्णीयते न किमु न व्रियते भवत्या ।
नायं नलः खलु तवाति महानलाभो
यद्येनमुज्झसि वरः कतरः परस्ते ॥"

इत्येतेनैकेनैव श्लोकेन श्लेषानुरागी कविरिन्द्राग्नियमवरुणनलान् पञ्चापि वर्णयन् अहो, वीक्ष्यमाणो भवति ।

महाकवीनां रचनासु निसर्गतयैवानुप्रासयमकादीनां शब्दालङ्काराणां घटा आपतिता भवति । सा तेषां काव्यगगनमावरीतुं स्वत एव सातिशयवेगं धावन्ती वीक्ष्यते । न तदर्थं ते स्वल्पतमेऽपि प्रयासे प्रवर्तन्ते । अस्मादेव कारणात् अस्य

महाकवेः काव्ये ते सर्वत्रैव विजृम्भमाणाः प्राप्यन्ते। अत्र तु केवलं तच्छ्रिया स्वलेखन्या एव सौभाग्यं वर्धयितुमुदाहरणत्वेन श्लोकद्वितयं निधीयते—

यमकस्य भव्या विभा विभाव्या—

"अवलम्ब्य दिदृक्षयाम्बरे क्षणमाश्चर्यरसालसंगतम्।
स विलासवनेऽवनीभृतः फलमैक्षिष्ट रसालसंगतम्॥"

अनुप्रासस्य पेशलतया नन्दयन्त्वधुना—

कलकलः स तदालिजनानना-
द्दुदलसद्विपुलस्स्वरितेरितैः।
यमधिगम्य सुतालयमीयिवान्
धृतदरः स विदर्भपुरन्दरः॥

अप्रस्तुतविधानेऽपि कविरयमद्वितीयः। तदीयैषा विशिष्टता क्वापि शास्त्रीयकल्पनाकलिता सती, क्वापि श्रृङ्गारिणीभिरूहाभिरुल्लसिता सती; क्वापि च लोकव्यवहारवन्धुरतया वन्धुरा सती दृक्पथेऽवतरति।

अप्रस्तुतविधानं शास्त्रीयकल्पनाललितम्—

"अजस्रभूमीतटकुट्टनोत्थितैरुपास्यमानं चरणेषु रेणुभिः।
रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाणिमाङ्कितैः॥"

अप्रस्तुतविधानं श्रृङ्गारिकल्पनालोलम्—

"अधृत यद् विरहोष्मणि मज्जितं मनसिजेन तदूरुयुगं तदा।
स्पृशति तत्कदनं कदलीतरुर्यदि मरुज्ज्वलदूपरदूषितः॥"

अप्रस्तुतविधानं लोकव्यवहारवन्धुरम्—

"पचेलिमं दाडिममर्कबिम्बमुत्तार्य सन्ध्यात्वगिवोज्झितास्य।
तारामयं वीजभुजादसीयं कालेन निष्ठ्यूतमिवास्थियूथम्॥"

कविरप्रस्तुतानां चयनं व्याकरण-दर्शन-कामशास्त्रादिभ्योऽपि विदधानो दृग्गोचरीभवति। एतादृशानि पद्यान्यतिभूरिप्रमाणानि सन्ति। कालिदासमाघादिकविभिरपि एष पन्था अनुसृतः परमस्मिन् नैषधकारे त्वेषा प्रवृत्तिर्नितरां प्रौढतामुपेताचाप्यते। दर्शनव्याकरणादिभ्य एवोपमानान्यादत्तानि कविनेत्येतदपि न, साहित्य-नाट्यशास्त्रतोऽपि तानि गृहीतानि दृश्यन्ते।

"न वर्तसे मन्मथनाटिका कथं प्रकाशरोमावलिसूत्रधारिणी।

तवाङ्गहारे रुचिमेति नायकः शिखामणिश्च द्विजराड् विदूषकः ॥"

इत्येतस्मिन् श्लोके उपमानस्यादानं नाट्यशास्त्रतो विहितमास्ते ।

विदुषामिह केषाञ्चनोदीरणमिदं यदेवंविधाः प्रयोगाः पाण्डित्यप्रदर्शनदृशा कामं वरं स्युः परं न भवन्ति ते काव्यश्रीपरिपोषकाः । न भवन्ति तेऽलङ्कार्यभावानुभूत्यां सहायका मनागपि ।

नैषधीयचरिते पाञ्चालीरीतिर्विशेषेण विभ्राजते परं वैदर्भ्या अपि विभ्रमो बहुलामेवावदाततां वितन्वन् विद्योतते । क्वचित् क्वचिद् गौडी च राजतेतराम् । छन्दांस्यपीह काव्ये भूयांसि विविधानि च कविः प्रयुञ्जानः प्रेक्ष्यते । वस्तुतः श्रीहर्षसदृशानां प्रतिभावन्द्यमानानां किमपि न दुरासदम् ।

श्रीहर्षस्य काव्यमिदं श्रृङ्गाररसप्रधानम् । परं तत्र वीरकरुणहास्यादीनामपि रसानां मधुरिमाणमास्वादयितुं सचेतसः सदवसरमश्नुवन्ति । एकादश–द्वादश–त्रयोदशसु सर्गेषु वीररसस्य स्रोतस्विनी सरयं प्रवहन्ती सम्यग् दृष्टा भवति परं कवेः स वीररसो न मानसे वीरभावान् जनयति न तत्र सा शक्तिर्यया मन उत्साहेन उत्फुल्लति स तु सन् अपि वीरः श्रृङ्गारीव प्रतिभाति । तत्रातिशयोक्तेविलासः शब्दानाञ्च श्रीर्नृत्यन्ती समवतरति । दृश्यताम्—

"द्वेष्याकीर्तिकलिन्दशैलतनयानद्यास्य यद्दोर्द्वयी-
कीर्तिश्रेणिमयी समागममगाद् गङ्गा रणप्राङ्गणे ।
तत् तस्मिन् विनिमज्ज्य बाहुजभटैरारम्भि रम्भापरी-
रम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥"

षोडशे सर्गे हास्यरसच्छटापि स्मेरानना समवलोक्यते—

"स किञ्चिदूचे रचयन्तु तेमनो-
पहारमत्राङ्ग रुचेर्यथोचितम् ।
पिपासतः काञ्चन सर्वतोमुखं
तवार्पयन्तामपि काममोदनम् ॥"

यमधिकृत्य 'एको रसः करुण एव निमित्तभेदादि'ति भवभूतिर्बभाण तेनापि कृतार्थीक्रियतामिदानीम्—

"मदर्थसन्देशमृणालमन्थरः
प्रियः कियद्दूर इति त्वयोदिते ।
विलोकयन्त्या रुदतोऽथ पक्षिणः
प्रिये स कीदृग् भविता तव क्षणः ॥"

प्रकृतिवर्णनविषयकं प्रेम कवेः मुख्यतोऽप्रस्तुतविधानरतम्। न तत्र प्रकृतेर्बिम्बचित्राणि दृश्यन्ते। संयोगे विप्रयोगे च तदीया प्रवृत्तिः संलक्ष्यमाणा भवति। प्रथमसर्गे वर्णिता प्रकृतिपेशलता नलमुपतापयन्ती चेद् अवलोक्यते तदा चतुर्थसर्ग-समुल्लासिता सा दमयन्तीम्।

"सरसिजवनान्युद्यत्पत्यार्यमाणि हसन्तु न
हतरुचिसुहृच्चन्द्रं तन्द्रामुपैतु न कैरवम्।
हिमगिरिदृषद्दायादश्रि प्रतीतमदःस्मितं
कुमुदविपिनस्याथो पाथोरुहैर्निजनिद्रया॥

कालः किरातः स्फुटपद्मकस्य
वधं व्यधाद् यस्य दिनद्विपस्य।
तस्येव संध्या रुचिरास्रधारा
ताराश्च कुम्भस्थलमौक्तिकानि॥"

इत्यादिषु एकोनविंशद्वाविंशसर्गयोः शोभमानेषु श्लोकेषु प्रदर्शिता प्रकृतिलक्ष्मीः संयोगे रुचिमाकलयन्ती दीव्यति।

प्रकृतेः रम्यता स्वभावोक्तीनाञ्च विशदता यादृशी माघकाव्ये वीक्ष्यते मानसमोदवर्षिणी न तादृशीहेति केषाञ्चन काव्य-रसिकानां विचारः।

वस्तुतः संस्कृतकाव्येषु नैषधीयचरितमतीवोत्कृष्टपदमलङ्करोति इह दिङ्मात्रेण तत्रत्यानां सुमृदुललितानां पदानां रमणीयता अलङ्काराणां चमत्कारस्य चारुता, अनन्यनीकाशा अनुप्रासविलासाश्च चित्रिताः। काव्येऽस्मिन् उत्प्रेक्षाणामथ चोपमानां विभापि सर्वथैव अनुपमा दृष्टा भवति। नात्र संशयो यदेतत्काव्यं महीयः सचेतसां धियं चित्तक्षोभयमपि पूर्णतया परितोषयति। एतेषां भूयिष्ठानां परमश्लाघनीयानां गुणानामग्रे कस्य नाम हि जनस्य दृष्टिं द्वित्रास्तुच्छतमा दुर्बलतमाश्च पुनरुक्ततादिदोषाः कथमपि नावर्जयितुं शक्नुवन्ति। एतत्काव्यप्रशंसायामिदं युक्तमेवोक्तं केनापि—

"तावद् भा भारवेर्भाति यावन्माघस्य नोदयः।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥"

कान्यकुब्जेश्वरो जयचन्द्रः स्वयमेवास्मै क्रान्तदर्शिने कवये ताम्बूलद्वयमासनञ्च प्रदाय सम्मानं यददर्शयत् तत्तु वस्तुतोऽस्यामरयशस्कस्य कवीन्द्रस्य सरस्वतीसमाराधनसमवाप्तप्रतिभायाः पुरो नालिपष्ठमपि महत्त्वं मूल्यं वा निदधाति। अहो तस्य शेमुषी धन्या यां तदीयः प्रतिद्वन्द्वी अपि श्लाघते एवम्—

"हिंस्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्यता
स्तस्यैकस्य पुनः स्तुवीमहि महः सिंहस्य विश्वोत्तरम् ।
केलिः कोलकुलैर्मदो मदकलैः कोलाहलं नाहलैः
संहर्षो महिषैश्च यस्य मुमुचे साहंकृते हुंकृते ॥"

नैषधीयचरितं मानवजीवनस्य समग्रतां नाङ्कते तत्र शृङ्गारस्यैव एकदेशिचित्रं चित्रितं कथासंयोजनमपि कलात्मिकया दृष्ट्या नाधिकं समीचीनमित्येतद् यत् काव्यमिदं लक्ष्यीकृत्य केचन शंसन्ति न तत्रास्मदीयं मनो रज्यति । जगत्याः सर्वेऽपि मानवा येषु भावेषु जीवन्ति तेषां भावानामत्र काव्ये सर्वत्र मनोरञ्जन-कारिणी सुन्दरता रममाणा वीक्ष्यते । चन्द्रस्य आह्लादकता, सुमनसां सौरभमारा-माणां मनोज्ञमञ्जुलता, उद्दामा वासन्तिकी श्रीः सुन्दर्याः सौन्दर्य्यम्, संगीतस्य माधुर्यम्, सुधोपमास्तेते सरसाः पदार्थाः कं न मानवं रमयन्ति ? काव्येऽस्मिन् एते सर्वेऽपि पदार्थाः नितरामेव प्रवीणतया कलात्मकतया गीताः सन्ति । तेषां सौन्दर्यस्योन्मीलनाय कौशलस्य सा सीमा कविना प्रदर्शितास्ति या कदाचिन्ना-न्येन कविनाविर्भाविता । मानवस्य प्रकृतिः संसारोन्मुखी वर्तते । तस्याः संसा-रोन्मुखतां काव्यमेव तथा परावर्तयितुं प्रयतते यथा सा मनस्तृप्तिसंलब्धिपूर्वकं हसन्ती हसन्ती तल्लक्ष्यं प्रति स्वीयां दृष्टिमुत्क्षिपेत् यदधिगमनेन शाश्वतिकी शान्तिरनश्वरं सुखञ्च समवाप्यते । काव्यमिदं स्वकीयस्यास्य कर्तव्यस्य पालने न मनागप्युपेक्षां कुर्वद् दृष्टं भवति । काव्यमिदं तदेव दर्शयति यन्मानवे निसर्गतो वसति । स्मरेण मानवस्तपति सत्यमेवेदं, कविरपि ब्रवीतीदमेव—'नलस्य तन्वी हृदयं विवेश यत्' । स्मरोपतप्तता न जघन्योऽपराधः । मानवस्तु अस्त्येव काम-क्रोधलोभमोहादीनामाकृतिः । परं स न एतैरेव विनिर्मितः । तन्निर्माणकारिषु तत्त्वेषु बुद्धिरप्येकतमं तत्त्वम् । सदसद्विवेचनपूर्वकमाचरणमेव मानवस्य 'धर्म' इति निगद्यते । अत एव नीतिकारोऽप्याह 'धर्मो हि तेषामधिको विशेषः' इति । तस्मात् कविस्तमेव, तामेव भाषामाश्रित्योपदिशति काव्ये यस्या भाषायाः प्रयोगाय स आदिष्टो भवति—

"स्मरोपतप्तोऽपि भृशं न स प्रभुर्विदर्भराजं तनयामयाचत ।
त्यजन्त्यसूञ्शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितव्रतम् ॥"

मानवस्य कुतूहलाक्रान्तमनस्कता सर्वविदिता । कविस्तामेव स्वकीये काव्ये अनन्यलब्धया चतुरतयादीदृशत् । अस्ति च मानवो नियतिपरतन्त्रः । एतद्धि नियतिपरवशत्वमपि मानवस्य लक्षणेऽन्तर्गतमस्ति । कविस्तदेव निर्दिशत्येवम्—

"अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ॥"

मानवः प्रकृत्या स्वार्थपरः सः स्वार्थायत्तो भूत्वा कदापि तदपि कर्तुमुद्युङ्क्ते येन परः प्राणी विपन्नतां प्रयाति । काव्यमिदं मानवस्य तां प्रकृतिं स्पष्टतः सम्मुखे तस्य निधायोपदिशति यत् परं विनाश्य स्वार्थसाधनं न मानवस्य धर्मः । विश्वासजुषां द्विषामपि मारणं धर्मधना निन्दन्ति—

"विगर्हितं धर्मधनैर्निबर्हणं विशिष्य विश्वासजुषां द्विषामपि ।"

कविरयं—"मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः ।
का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदलज्जा ॥"

इत्यादिकं यद् विविधं वचनसहस्रं दमयन्तीम् अवीवदत् तत् सर्वं मानवमेव पूर्णतया व्याख्याति । तत्र मानवप्रकृतेरेव उन्मेषो भाति । कामो हि मानवे बलवत्तमो भावः । तस्य भावस्य सर्वान् अपि स्वभावान् धर्मांश्च कविरत्र नलदमयन्तीचरितकीर्तनव्याजेन नितान्तमेव साधुतया दर्शयतिस्म । मानवे ज्ञानमज्ञानं च वर्तेते तत्र बुद्धिर्मनश्च राजेते । तस्य हि एतस्या उभयविधताया यत्र निरूपणं वा प्रदर्शनं भवति तन्मानवसमग्रताया वर्णनमिति प्रोक्तम् । अत्र काव्ये दमयन्तीं कामयमानस्यापि नलस्य इन्द्राग्न्यादिदेवचतुष्टयस्य यद् दूतत्वं गीतं, देवदूततां गतस्य नलस्य दमयन्त्याः सविधे गमनं तस्याश्च पुरस्तात् देवानां सन्देशस्य समुपस्थापनं यदभिहितं, इन्द्रसन्निकाशान् अपि देवान् अवज्ञाय सकृद्वृतस्य नलस्यैव दमयन्त्या वरणं यदुपनिबद्धं, करालकलेर्निन्दनीयं यदाचरणमुद्ग्रथितं, तत्तच्छास्त्राणां मताद्युपस्थापनेन मानवस्य प्रज्ञायाः सर्वाङ्गीणत्वेनोद्रेकाय प्रयत्नो यः कृतः, शृङ्गाररसोर्मिसागरभूतस्य काव्यस्यास्य क्लिष्टक्लिष्टतरग्रन्थ्युद्ग्रथितत्वं यद् विहितं तदेतदखिलमप्युपक्रमणं मानवं पूर्णतया प्रदर्शयितुं तस्य सर्वान् अपि तांस्तान् विशेषान् प्रकाशयितुं हृदयपक्षं बुद्धिपक्षञ्च आलिखितुं कृतम् । अतः महाकविना श्रीहर्षेण यदुद्देश्यं पुरो निधाय काव्यश्रेष्ठमिदं सृष्टं तस्योद्देश्यस्य पूर्तिः सर्वविधतयात्र संवृत्ता । इयं हि नैषधीयचरिताख्या कविता न केवलं कविता सा वैदुष्यविलसिता कवितास्ते । तामवगाह्य मानवः कवित्वं वैदुष्यञ्चोभयमपि लब्धुमर्हति । विद्वत्तालाभायावश्यमेवैतत्काव्यौषधं विदुषां सेवनीयमहर्निशम् ।

( ४२ )

## गद्य-विकासः

गीर्वाणवाण्याः गद्यसाहित्यं परमललितं पाण्डित्यपेशलं चिरन्तनञ्च। वैदिक-संहितानामुदयो यस्मिन् पूततमे पुरातनतमे युगे बभूव तस्मिन्नेव युगे गद्यमप्यभिव्यक्तिमगमत्। कृष्णयजुर्वेदस्य तैत्तिरीयसंहितायां यस्य गद्यस्य दर्शनं भवति तदस्ति गद्यस्याद्यं स्वरूपम्। तस्यां संहितायां किञ्च तस्यैव वेदस्य काठकमैत्रायण्यादिसंहितास्वपि गद्यं तावत्यामेव मात्रायां परिलक्ष्यते यावत्यां मात्रायां तत्र पद्यानि शोभन्ते। ततश्च गद्यस्य प्रतिष्ठा अथर्ववेदे वीक्ष्यते। अथर्वणः षष्ठो भागो गद्यात्मक एव समग्रः समवाप्यते। ब्राह्मणग्रन्थेषु तु सर्वत्र गद्यमेव विद्योतते। आरण्यकं साहित्यमपि गद्यमयं भवद् विभाति। उपनिषत्सु प्राचीनतमोपनिषदपि गद्यात्मिकैव भूत्वा विभ्राजते। तदेवं वैदिकसाहित्ये गद्यस्य प्रयोगोऽतिव्यापकत्वेनोदात्तत्वेन च कृतो दृश्यते। आवेदोपनिषदन्तानां ग्रन्थानां गद्यं पर्यालोच्य ज्ञायते यद् गद्यस्य विकासः शनैः शनैः समजायत। यथा यथा समयो व्यतीयाय तथा तथा तत् पर्यपुष्यत्। वेदप्रयुक्ताद् गद्याद् ब्राह्मणारण्यकेषु प्रयुक्तं गद्यं परिष्कृततरं विलोक्यते। उपनिषत्कालवर्तिनि गद्ये तु रमणीय उत्कर्षः परिस्फुरति। वस्तुतो वैदिकवाङ्मये समुन्मीलिता गद्यपरम्परा स्फुटमेवेदं ज्ञापयति यदस्मदीयो देशो गद्यस्याविर्भावने चिरात् सान्द्रस्नेहमदर्शयत्।

अत्र वैदिकसाहित्याद् गद्यस्य त्रिचतुराण्युद्धरणान्युद्ध्रियन्ते येनोपरिकथितं कथनं पुष्टिमासादितं स्यात्—

"भृगुर्वै वारुणिः वरुणपितरमुपससार अधीहि भगवो ब्रह्मेति। तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तꣳ होवाच। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व।" ( तैत्तिरीय० )

"स एकया पृष्टो दशभिः प्रत्युवाच। अथैनमुवाच—'वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वां यजै इति। 'तथा' इति स वरुणं राजानमुपससार— 'पुत्रो मे जायतां, तेन त्वां यजै' इति। तथेति।" ( ऐतरेयब्रा० )

"मूर्धाऽहं रयीणाम्, मूर्धा समानानां भूयासम्; रुजश्च मा वेनश्च मा हासिष्टाम्। मूर्धा च मा विधर्मा च मा हासिष्टाम्।" (अथर्ववेदः)

वैदिकसाहित्यस्य भाषा विषयप्रधानास्ति। न तत्र सौन्दर्यं प्राप्यते। तत्र समास-प्रयोगोऽपि न दृश्यते। तत्रत्यानामाख्यानानां भाषायां रोचिष्णुता सरलता स्वाभाविकता च वीक्ष्यन्ते। न तत्र प्रौढत्वं न च सान्द्रश्लिष्टलसितानि पदान्येव प्राप्तानि भवन्ति। परं प्रासादिकतायाः कुत्राप्यभावो नास्ति। एषः हि तदीया प्रसन्ना पदावली किमपि विचित्रमेव माधुर्यं वर्षति। यो हि मधुरिमा—"सत्यं वद; धर्मञ्चर; स्वाध्यायान्मा प्रमदः; तमसो मा ज्योतिर्गमय; तेजोऽसि तेजो मयि धेहि" इत्यादिकायां सरलतां परिष्वजमानायां पदपङ्क्त्यां सुखं प्रीतिञ्च ददाति न तादृशं सुखं प्रसन्नतां वा तादृशीं, कृत्रिमताकलिता पदश्रेणी प्रयच्छति।

आरण्यकस्य गद्यस्य सौन्दर्यं वीक्ष्यताम्—

"एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति। एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते।"

वैदिकयुगे यादृश्यां गद्य-निबन्धनशैल्यां विपश्चितां मनोऽनुरागः प्रावर्तत न तादृश्यां शैल्यां तदुत्तरकालवर्तिनो विद्वांसो रुचिं दर्शयन्तो लोचनगोचरीभवन्ति। अत एव तद्विधस्य गद्यस्य विकासः प्रसारश्च निरुद्धोऽभवत्। वैदिकयुगस्य गद्यं सामान्यं वर्तते। तत्र सैव भाषा प्राधान्येन प्रयुक्तास्ति या दैनिकव्यवहारे व्यवह्रियते। दैनिकव्यवहाराहृता भाषा न प्रायेण सुरक्षायोग्या मता भवति अतस्तस्यां दिशि लोके विदुषां चेत उपसरति। गीतिषु पद्येषु स्वर-लयविशिष्टायां वाक्यावल्यां भवत्याकर्षणम्। मनस्तत्र विशेषेणानुरज्यति। अशिक्षिता अभिजातयश्छन्दोबद्धया गिरया अनायासेन आवर्जिता भवन्ति; सा छन्दोमयी वाणी झटिति हृदयं स्पृशति भवति च सा सस्वरं कण्ठगता। अतः साहित्ये पद्यमेव स्थायि सम्मानं लभते। संस्कृतभाषाया वैदिककालवर्तिनो गद्यस्य निरोधे ह्येषापि लोकभावना कारणमभवत्। गद्यस्य प्रयोगः शनैः शनैः कृशतामेव ययौ प्रायेण यादृशगद्यस्य स्वरूपमुपनिषदां वा ब्राह्मणानां वा संहितानां समये पर्यवेक्ष्यत तादृशमेव महाभारतीयमपि गद्यं वीक्ष्यते। वीक्ष्यताम्—"स तथेत्युक्त्वा तमश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलमुपाध्यायानी च स्नाता केशानापयन्त्युपविष्टा तक्को नागच्छतीति शापायास्य मनो दधे।"

गद्यम्प्रति विदुषामनुरागः परं सदैव न्यूनतायां वाधिकतायां प्रवर्तमानोऽदृश्यत। इदमेव कारणं यद् यास्को निरुक्तं गद्ये निवध्नन् तस्मिन् कालेऽपि दृष्टो भवति यस्य कालस्यातीतस्य सप्तविंशतिशतकानि यातानि।

गच्छता कालेन गद्यस्योपयोगः प्रधानतया टीकासु व्याकरण–ज्यौतिषायुर्वेदादिविषयकेषु ग्रन्थेषु विद्वद्भिः प्रारब्धः। यादृशा विषया आसंस्तादृशं सौन्दर्यमपि तत्रत्ये गद्ये स्थानमलभत। महर्षिपतञ्जलेर्महाभाष्ये गद्यश्रियं पश्यन्तु—

"एवं हि श्रूयते। बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच। नान्तं जगाम। बृहस्पतिश्च प्रवक्तेन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालो न चान्तं जगाम।"

इदमपि गद्यमनलङ्कृतमेव। परं भाषा शिष्टजनानामस्ति। तत्र प्राञ्जलता विद्यते। सा भावाभिव्यञ्जने क्षमा च।

बुद्धाविर्भावात् प्रागेव वैदिकसाहित्यं परमविस्तारं प्रपेदे तदीया समृद्धिर्विपुलताञ्च प्रापद्यत। तद्रक्षाया अपेक्षा विद्वज्जगतान्वभूयत। अतः नवसाहित्यस्य निर्माणमारब्धमभूत्। एतन्नूतनं साहित्यमपि गद्ये प्रणीतमजायत। तद् गद्यं सूत्ररूपमादाय प्रादुरभूत्। वैदिककर्मकाण्डसम्बन्धि साहित्यं सूत्रशैल्यात्मके गद्ये यद्रूपमादायोन्मीलितसभवत् पाणिनेः अष्टाध्याय्यां तद्रूपं विकस्वरतां जगाम। सूत्रस्वरूपस्य गद्यस्यास्योपयोगः षट्स्वपि दर्शनेषु कृतोऽवाप्यते।

सूत्रग्रन्थप्रणयनकारिणां मेधाविनां दृष्टिर्गद्यस्य परिष्करणे तस्य संवर्द्धने पल्लवने वा नासीत्। सा तु शास्त्रीयसमृद्धिरक्षणप्रयोजनेनैव उपससार। तदीयमुद्देश्यमिदमेवासीत् यत् तत्त्वस्य समुपस्थानमतिपरिमितशब्देषु कृतं स्यात्। येन तदायासमन्तरेण हृदयङ्गमं भवेत् किञ्च सुरक्षामपि उपेयात्।

लौकिकसंस्कृतकाले गणितज्यौतिषायुर्वेदव्याकरणदर्शनप्रभृतिविषयान् अपि यद्यपि पद्यमय्यां वाण्यां प्रणेतुं प्रेक्षावन्तः सन्नद्धा अजायन्त परं समये समये तान् अपि विषयान् प्रतिभाशालिनो लेखका गद्य एव रचयाम्बभूवुः। चाणक्यो नैजे अर्थशास्त्रे गद्यं प्रयुञ्जानोऽवाप्यते। तद्गद्यच्छटावलोक्यताम्—

"दर्शने प्रसीदति। वाक्यं प्रतिगृह्णाति। आसनं ददाति। विविक्तो दर्शयते। शङ्कास्थाने नातिशङ्कते। कथायां रमते। परिज्ञाप्येष्ववेक्षते। पथ्यमुक्तं सहते। स्मयमानो नियुङ्क्ते। हस्तेन स्पृशति। श्लाघ्ये नोपहसति।"

कीदृशानि लघुलघुवाक्यानि गद्येऽस्मिन् शोभन्ते।

सम्प्रति चरकस्य चरकसंहितायां गद्यस्याभा[3] वीक्ष्यताम्—"नारत्नपाणिर्नास्नातो नोपहतवासा नाजपित्वा नाहुत्वा देवताभ्यो नानिरूप्य पितृभ्यो नादत्वा गुरुभ्यो नातिथिभ्यो नोपाश्रितेभ्यो नापुण्यगन्धो नामाली नाप्रक्षालितपाणिवदनो नाशुद्धमुखो नोदङ्मुखो न विमना......न प्रतिकूलोपहितमन्नमाददीत।"

बौद्धविद्वांसः स्वसमयेऽनेकान् ग्रन्थान् गद्येऽपि अरचयन्। तेषु बहवो लोकप्रियाणि महात्मनो बुद्धस्याख्यानानि गद्ये लिलिखुः। आर्यशूरो जातकमालां नाम सुप्रथितां कृतिं गद्य एव लिलेख। तत्रत्यं गद्यं पश्यन्तु विज्ञाः—

"अथ कदाचित् तस्य महासत्त्वस्य भोजनकाले स्नातानुलिप्तगात्रस्य कुशलोदारसूदोपकल्पिते समुपस्थिते वर्णगन्धरसस्पर्शादिगुणसमुदिते विचित्रे भक्ष्यभोज्यादिविधौ तत्पुण्यसम्भाराभिवृद्धिकामो ज्ञानाग्निनिर्दग्धसर्वक्लेशेन्धनः प्रत्येकबुद्धस्तद्गृहमभिजगाम भिक्षार्थी।"

अस्मिन् गद्ये समासानामपि प्रयोगेण सह कथावस्तुवर्णनं प्रवाहशीलभाषायां कृतमीक्ष्यते।

लौकिकसंस्कृतग्रन्थानां यस्मिन् काले प्रणयनमभूत् तदा गद्यस्य त्रीणि रूपाणि दृष्टान्यभवन्—(१) पौराणिकम् (२) शास्त्रीयम् (३) साहित्यिकम्। पौराणिके गद्ये वैदिककालस्य कतिपये आर्षा अपि शब्दाः प्रयुक्ताः प्राप्यन्ते। श्रीमद्भागवत-विष्णुपुराणादिषु व्यवहृते गद्ये उक्ता विशिष्टता स्पष्टमेवाधिगता जायते। इदं हि गद्यं वैदिकं गद्यं लौकिकञ्च गद्यं परस्परं संयोजयतीव। पौराणिकं गद्यमलङ्कृतं गुणगुम्फितञ्च। श्रीमद्भागवते तु गद्ये प्रौढता भावाभिव्यञ्जननदीष्णता चातितरामीक्षिता भवति। दृश्यताम्—

"तेषां विशीर्यमाणानामतिमधुरसुरभिसुगन्धिबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्वेणेलावृतमुपप्लावयति। यदुपजोषणाद् भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति।

विष्णुपुराणस्य च गद्यश्रीरियम्—

"अथैव व्योम्नि वह्निपिण्डोपमं त्वामहमपश्यं तथैवाद्याग्रतो गतमप्यत्र भगवता किञ्चिन्न प्रसादीकृतं विशेषमुपलक्षयामीत्युक्तेन भगवता सूर्येण निजकण्ठादुन्मुच्य स्यमन्तकनाम महामणिवरमवतार्य एकान्तेन्यस्तम्।"

शास्त्रीयस्य गद्यस्योदाहरणत्वेन सन्ति दर्शनग्रन्थाः। षड्दर्शनेषु विद्वांस-

आचार्यां यानि भाष्याणि कृतवन्तस्तेषु भाष्येषु च यस्य गद्यस्य दर्शनं सञ्जायते तन्निर्मलं गभीरं गहनञ्च वर्तते। मीमांसासूत्रेषु शवरस्वामिनो, न्यायसूत्रेषु वात्स्यायनस्य, वेदान्तसूत्रेषु च शङ्कराचार्यस्य भाष्यं दार्शनिकस्य गद्यस्य विशिष्टोदाहरणत्वेन विभाति। अत्र भाष्येभ्यो द्वित्राण्युद्धरणानि निधीयन्ते—

"इच्छयात्मानमुपलभामहे। कथमिति? उपलब्धपूर्वे ह्यभिप्रेते भवतीच्छा। यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि न तानि प्रत्यस्माकमिच्छा भवति।" (श० भा०)

एतद् गद्यं कियत् सरलं रुचिरं च विद्यते।

"सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यवस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि। उच्यते—न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्। न चायमस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यवसितव्यमिति।"

आचार्यस्य शङ्करस्य गद्ये यद्यपि प्रौढता परिस्फुरति परं न सा प्रसादमुज्झति।

न्यायमञ्जरीकारस्यापि जयन्तभट्टस्य गद्यं ललितं दृश्यते। स्वभावकर्कशमपि न्यायमाचार्यः स्वकीयया शैल्या हृदयङ्गमं कुरुते। तदीये गद्ये व्यंग्योक्तीनामासारवर्षा समवाप्ता भवति। अधोनिहितेनोद्धरणेन तदीयाया गद्यसुषमाया दर्शनं भवितुमर्हति।

"आः क्षुद्रतार्किक सर्वथानभिज्ञोऽसि, ब्रह्मैव जीवात्मानो नहि ततोऽन्ये। नहि दहनपिण्डाद् भेदेनापि भान्तः स्फुलिङ्गा अग्निस्वरूपा भवन्ति। तत किं ब्रह्मण एवाविद्या? न च ब्रह्मणोऽविद्या।"

नव्यन्याये तर्कप्रधानशैल्याश्चरमोत्कर्षः संलक्ष्यते। तत्रत्यं गद्यं तु नितान्तदुरूहं दुर्बोधञ्च। तार्किकशिरोमणीनां श्रीरघुनाथचरणानां किञ्च गदाधरमहाभागानां ग्रन्थान् विलोक्यैव तत्रत्यस्य चण्डस्य गद्यस्य स्वरूपं सम्यग् द्रष्टुं शक्यते।

दर्शनशास्त्रस्य विवेचनपद्धतिः साहित्यशास्त्रिभिरपि अभ्यनन्द्यत। तैरपि नैजगद्ये सैव शैली अभ्युपगता सूक्ष्मविचारकारिणी तर्कप्रधाना। दृश्यतां काव्यप्रकाशीयं गद्यम्—

"तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याऽप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते तेनासौ व्यङ्ग्य एव मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः।"

रसगङ्गाधरकारो जगन्नाथस्तु गद्यस्य यद्रूपमदर्शयत् तत्तु सरलतां स्पृशत्येव न। तत्र तु सैव च्छटा शोभते या नव्यन्यायग्रन्थेषु राजते।

केषुचन शास्त्रीयेषु ग्रन्थेषु गद्यं पद्यमिश्रमपि दृश्यते। तत्र मुख्यविषयस्य विवेचनं गद्ये विहितं परं पद्यानां प्रयोगः समर्थकत्वेन कृतः। एषा शैली चिकित्साशास्त्रेऽलङ्कारशास्त्रे च प्राप्यते। कौटिल्येनार्थशास्त्रेऽपि इयमनुसृता।

संस्कृतभाषायाः गद्यकाव्यानि तानि नेदानीमुपलभ्यन्ते यानि दण्डिवाणप्रभृतीनां कवीनां कालात् प्राक् प्रणीतान्यभूवन्। कात्यायनेन वार्तिके हि आख्यायिकाया यो निर्देशः कृतः, पतञ्जलिना वासवदत्ता-सुमनोत्तराभैमरथीनां य उल्लेखो विहितः, भोजेन स्वकीये शृङ्गारप्रकाशे मनोवतीसातकर्णीहरणनामधेययो रचनयोर्यः सङ्केतः समुपस्थापितः, दण्डिना मनोवत्या या प्रशंसानुष्ठिता, हाललालितः श्रीपालितो यां तरङ्गवतीं लिलेख, रामिलसौमिलौ च यां शूद्रककथां रचयाम्बभूवतुः; वाणः स्वहर्षचरिते भट्टारहरिचन्द्रस्य यद् गद्यं प्राशंसत् तत्सकलमपि गद्यकाव्यनिकुरम्बं सम्प्रति दुर्लभं, न तदधिकृत्य किमपि विदितं परं तद्विषयिणी या चर्चा तैस्तैरनुष्ठिता सा तु सुदृढतयेदमवगमयति यदस्मद्भारते सुबन्धुवाणादिकविभ्यः प्रागपि मनोहरगद्यकाव्यकर्तारः कवयः प्रादुरभूवन्। नूनमस्मद्देशस्य गता सहस्रद्वयाब्दव्यापिनी कालकला गद्यकलया सर्वथैव विभूषिता बभूव।

अतिपुरातने युगे गद्यस्य यद् रूपं सरलं सरसञ्च दृष्टमभवत् परं तदुत्तरकाले तस्य यद्रूपं लोचनपथेऽवातरत् तत्प्रामुख्येन अलङ्कारालङ्कृतं समासबहुलं श्लिष्टञ्च व्यालोक्यत। ईशवीये द्वितीये शतके महाक्षत्रपरुद्रदाम्नो यः शिलालेखो जनुरवाप तस्य गद्यं ज्ञापयति यत् तदाप्रभृत्येव कवीनां मानसमलङ्कारालङ्कृतगद्यप्रणयने प्रणयं बबन्ध।

"प्रमाणमानोन्मानस्वरगतिवर्णसारसत्वादिभिः परमलक्षणव्यञ्जनैरुपेतकान्तमूर्तिना स्वयमधिगतमहाक्षत्रपनाम्ना नरेन्द्रकन्यास्वयम्बरानेकमाल्यप्राप्तदाम्ना महाक्षत्रपेण रुद्रदाम्ना सेतुं सुदर्शनतरं कारितम्।" (रुद्रदाम्नो गिरिनारलेखः)

गद्यमिदं स्वागामिकालगामिनो गद्यगुम्फनकारिणस्तथैवाचूचुदत् यथा मनोवतीप्रभृतिगद्यकाव्यानि। गिरिनारशिलालेखे गद्यस्य यद्रूपमालोक्यते तस्य प्रौढं प्रकृष्टं सुन्दरतरं च रूपं हरिषेणरचितसमुद्रगुप्तप्रशस्त्यां प्राप्यते। तत्र सुदीर्घसमासश्रुतिसुखदशब्दसमुदायसुशोभितगद्यकाव्यस्य मनोज्ञच्छटोच्छलति।

श्लेषस्यापि सुन्दरता तत्र शोभते। एषा गद्यशैली उत्तरकालोद्भूतान् गद्य-लेखकान् नितरामप्रीणात्। तस्मात् तेषां गद्यकाराणां गद्यमस्मत्पुरः परममञ्जुलतयालिङ्ग्यमानमलङ्कारैरलङ्क्रियमाणं श्लेषैराश्लिष्यमाणं दीर्घदीर्घतरसमासैराक्रम्यमाणमुपतिष्ठति। एतादृशेन विकासोन्मुखेन गद्येनास्मद्राष्ट्रस्य ताः शताब्द्यो मण्डिता अभूवन् यासु गुप्तसाम्राज्यं हर्षवर्द्धनशासनानेहा च चकासाञ्चक्रतुः।

सुबन्धु-दण्डि-बाणकवयः स्वप्राक्तनगद्यप्रणेतॄणां गद्यश्रियं चरमोत्कर्षमनयन्। तेषां प्रशंसनीयेन प्रयासेन गद्यकलाकलेवरं सकलाभिर्ललितताभिः समग्रैः प्रसाधनैश्च सुसज्जितं भूत्वा बभौ।

सुबन्धुर्वासवदत्तां प्रणीय गद्यस्य तद्रूपं परमोत्कर्षं निनाय यत्र दीर्घदीर्घतरसमासानां बहुलता अलङ्काराणां विपुलता श्लिष्टपदानाञ्च प्रचुरता भवति। सः प्रत्यक्षरं श्लेषमयोजयत् वक्रोक्तेः सन्निवेशं कृत्वालङ्कारचमत्कारेण गद्यं स्वकीयमतितरामेवादीपयत्। स वस्तुतः श्लेष-कविः। स सभङ्गाभङ्गोभयविधश्लेषं प्रयुज्य स्वीयं काव्यं विचित्रस्याध्वन उत्कृष्टोदाहरणत्वेन ससर्ज क्वचित् क्वचित्तु तदीया श्लिष्टा पद-रचनैतावतीं क्लिष्टतां भजते यत् तामवगन्तुं तदर्थमवधारयितुं विद्वत्तल्लजानामपि प्रज्ञा चङ्क्रम्यते। क्वचित् क्वचित् कोष-साहाय्यमन्तरेण पदमेकमपि पाठक उपसर्तुं शक्नोति न।

दीर्घतरसमासवती पदावल्येकेक्ष्यताम्—

"यश्च मदकलकलहंससारसरसितोद्भ्रान्तभाः कूटविकटपुच्छच्छटाव्याधूतविकचकमलखण्डविगलितमकरन्दबिन्दुसन्दोहसुरभितसलिलया······।"

प्रसन्नश्लेषशोभितवाक्यानि कानिचनावलोक्यन्ताम्—

"······वालिनमिवाङ्गदोपशोभितं, कुहूकण्ठमिव हारिकण्ठं, कनकमृगमिव रामाकर्षणनिपुणं, जयन्तमिव वचनामृतनन्दितवृद्धश्रवसं, कृष्णमिव कं सहर्षं न कुर्वन्तम्······।"

विरोधोत्प्रेक्षोपमादिकालङ्कारयुक्तेषु वाक्येषु श्लेषस्य च चमत्कारोत्पादने स प्रयतमानो दृश्यते। तदीयाः सन्त्युपमाः कौतूहलकारिण्यः। तासु कवेरद्भुतविदग्धताया आभा परिस्फुरति।

"व्याकरणमिव विततस्त्रीनदीकृत्यबहुलम्, न्यायविद्यामिव उद्योतकरस्वरूपाम्" इत्यादिकान्युदाहरणान्यत्र प्रमाणम्। तस्य प्राकृतिकानि दृश्यानि श्लेषराहित्याद्‌तिशयतया मनो रमयन्ति।

"क्रमेण च रजोविलुठितोत्थितकुलायार्थिपरस्परकलहविकलकलविङ्ककुलकल-कलवाचालशिखरिपु......भगवती सन्ध्या समदृश्यत" इत्यादिषु अभिरामसान्ध्यश्रीः कं न कोविदं नन्दयति । कलापक्षस्य चेत् साम्राज्यं क्वापि दृश्यते तदा तदस्यैव कवेः रचनायां वासवदत्तायां दृश्यते । कविर्बाणभट्टः सत्यमेवाह कृतिमेतदीयामुद्दिश्य—

"कवीनामगलद् दर्पो नूनं वासवदत्तया ।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥"

बाणो बहूनि ग्रन्थरत्नानि स्वलेखनी-रत्नाकरात् साहित्यसंसाराय समर्पयामास । कादम्बरी हर्षचरितञ्च तस्य गद्यकाव्यानां मौलिभूषणभूतावनुपमौ ग्रन्थौ स्तः । हर्षचरितमुपलब्धास्वाख्यायिकासु पुरातनतमा आख्यायिकास्ति । बाणस्य समये गद्यस्य जीवनम् "समासबाहुल्यं सतमभूत् । अतः कविस्तदेव लक्ष्यीकृत्य हर्षचरितं निबबन्ध । स आख्यायिकां हर्षचरिताभिधानां प्रणीय संस्कृतसाहित्यसंसारस्य गौरवमवर्धयत् । तदीयेयं रचना प्रथमैवासीत् या भामह–दण्डि-रुद्रटप्रभृतींस्तान् विद्वद्वरान् अनूतुपद् ये हि कस्यापि विशिष्टस्य लक्ष्यग्रन्थस्याभावात् आख्यायिकाया लक्षणं यथायथं प्रदर्शयितुं नितान्तमेवोत्सुकतामबिभरुः । हर्षचरितं न केवलं काव्यवैभवत्वेन विदितमपितु तत् सप्तमशतकवर्तिनो भारतस्यापि अत्युज्ज्वलं प्रामाणिकं सांस्कृतिकं चित्रमपि सत् साहित्यजगति देदीप्यते ।

तत्रत्यां हि गद्यश्रियं दर्शयितुमुद्धरणमेकं निधीयते—"......स्वमपि धूमसम्भोदसमुद्भूतिभियेव भक्षयन्तः, स्वेदिन इव विलीयमानमधुपटलगोलगलितमधूच्छिष्टवृष्टयः काननेषु, खलतय इव परिशीर्यमाणशिखासंहतयो महोषरेषु, गृहीतशिलाकवला इव ज्वलितसूर्यमणिशकलेषु शिलोच्चयेषु, प्रत्यदृश्यन्त दारुणा दावाग्नयः ।"

बाणस्य कादम्बरी अस्त्यतिद्वयी रचना । न तादृशी क्वापि रचना साहित्यसंसारे द्वितीया । इमां रचनामधीत्यानुशील्य च विद्वज्जगद् बाणं 'बाणोच्छिष्टं जगत् सर्वम्' इत्यनेन श्लाघनेन श्लाघमानं चिराच्छ्रूयमाणं भवति । केवलमिदमेकं वाक्यं बाणस्य वा तदीयायाः कृतेः अस्या महनीयतां महीयस्कतामुच्चैरुद्घोषयति । साहित्यिकं यदपि सौन्दर्यं गीतं तदखिलमपि सर्वांशतस्तत्रोद्गीर्णं विलोक्यते । तत्र कलापक्षो भावपक्षश्च द्वावपि स्वकीयेन पूर्णेन समृद्धेन च वैभवेन अजेयेन प्रतापेन सह सानन्दं विभ्राजमानौ दृश्येते । चरित्रचित्रणप्रति यदा

दृष्टिर्गच्छति तदा सा तत्रैव स्थिरा भवति। न ततः क्वाप्यन्यत्र गन्तुमभिलषते; चेत् प्रकृतिच्छटावलोकनाय सा गच्छति तदा तत्रापि तस्याः स्थितिः सैव सञ्जायते तत्रापि सा निष्कम्पा भूत्वा निमेषालसपक्ष्मपङ्क्तिर्भवन्ती तदवलोकन एव परा भवति। सर्वाण्यपि वर्णनानि नितरामेव बन्धुराणि वदान्यानि समुज्ज्वलानि सन्ति। उपमोत्प्रेक्षादिकानां सकलानामप्यलङ्काराणां छटा तु तत्र भात्येव परं विरोधाभासश्लेष-परिसंख्यालङ्काराणां यादृशी मञ्जुला मधुरता अस्य कवेः कवितासु वीक्षिता भवति न तादृशी सम्भवतः क्वचिदपि वर्त्तते। हार्दिक्यः सर्वा अपि भावनाः साकारा भूत्वा अस्य गद्याजिरे नृत्यन्त्यः सविलासमीक्षणपथेऽवतरन्ति।

आदर्शस्य गद्यस्य सर्वेऽपि गुणास्ते ये तेन हर्षचरिते—

"नवोऽर्थो जातिरग्राम्या श्लेषः स्पष्टः स्फुटो रसः।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम्॥"

उल्लिखितास्ते सर्वेऽपि तस्य गद्ये विराजन्ते।

स एतावान् महान् यत् तत्प्रशंसायामुदीरिताः—

"कादम्बरीरसभरेण समस्त एव
मत्तो न किञ्चिदपि चेतयते जनोऽयम्"

"प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति"

"रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति।
सा किं तरुणी? नहि नहि वाणी बाणस्य मधुरशीलस्य॥"

इत्यादिकाः सर्वा अपि सूक्तयो लघीयस्य एव प्रतिभान्ति।

तदीया रसनोपमाश्रीः प्रेक्ष्यताम्—

"क्रमेण च कृतं मे वपुषि, वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकरेण इव मदेन नवयौवनेन पदम्।"

सम्प्रति परिसंख्याया अपि लक्ष्मीः इह विलोक्यताम्—

यत्र च महाभारते शकुनिवधः पुराणे वायुप्रलपितं, वयःपरिणामे द्विजपतनम्,......मूलानामधोगतिः।"

उपदेशस्य माधुर्यमत्र लघुलघुवाक्यैः सरलसरलतरैः कियद्रमणीयतां नीतम्—

"सखे पुण्डरीक, नैतदनुरूपं भवतः। क्षुद्रजनक्षुण्ण एष मार्गः धैर्यधना हि साधवः। किं यः कश्चित् प्राकृत इव विकलीभवन्तमात्मानं न रुणत्सि। क्व ते तद् धैर्यम्। क्वासौ इन्द्रियजयः।" तत्र—"प्रोषितजनजायाजीवोपहारहृष्टमन्मथास्फालितचापरवभयस्फुटितपथिकहृदयरुधिरार्द्रीकृतमार्गेषु" इत्येतादृशानि सहस्रशो दीर्घदीर्घतरसमासशालीनि वाक्यानि; "भीष्ममिव शिखण्डिशत्रुम्, निदाघदिवसमिव सतताविर्भूतमृगतृष्णम्..." इत्यादिकानि भूयिष्ठानि श्लिष्टानि वाक्यानि; "सुरभिविलेपनधरमपि सतताविर्भूतहव्यधूमगन्धम्, मातङ्गकुलाध्यासितमपि पवित्रम्" इत्येवंविधानि पुष्कलानि वाक्यानि विलसन्ति विरोधाभासविभावितानि।

दण्डी गद्यकविषु सः अस्ति यमित्थं समग्रमपि साहित्यिकं जगत् स्तौति—

"जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि।

दण्डिनो गद्यं नितरां सुबोधं सरसं प्रवाहमयञ्चास्ति। न तदस्ति श्लेषभारवामनीभूतं न च तदस्ति समासकर्कशान्दुकानिबद्धम्। तदस्ति व्यवहारक्षमं सजीवं स्फूर्तिसुललितम्। न तदलङ्काराडम्बर-निपीडितम्। शब्दानां चयनं व्यावहारिकं तत्र। भाषा च तत्र वाग्धारात्मिका।

तदीयदशकुमारचरितं हि आख्यानकाव्यस्योज्ज्वलं निदर्शनम्। तत्र हास्यं शिष्टं व्यंग्यं हृदयानन्दकरं, कथावस्तु कौतूहलौत्सुक्यवर्धनं, पात्राणि च एतस्यैव संसारस्य सन्ति, सन्ति च तानि प्राणवन्ति। वर्णनमस्ति स्वल्पं परं न तत्कथा-प्रवाहप्रतिबन्धि। लालित्यार्थं दण्डिकविर्विश्वविश्रुतः—"दण्डिनः पदलालित्यम्।" सः स्वरचनाभिर्विशेषतो दशकुमारेण—स्वसमयवर्तिसामाजिकस्थितिसम्बन्धि चारुतरं चित्रं च प्रस्तौति।

"अथ राजवाहनो विद्येश्वरस्य क्रियापाटवेन फलितमिव मनोरथं मन्यमानः पुष्पोद्भवेन सह स्वमन्दिरमुपेत्य,सादरं बालचन्द्रिकामुखेन निजवल्लभायै संगमोपायं वेदयित्वा......इत्यतिष्ठत्।" इत्येवंविधा तदीया गद्यश्रीः सर्वत्र शोभमानावाप्यते।

गद्यस्य यद् बीजं श्रौतग्रन्थेषु दृष्टमभूत् तदेवं हि संस्कृतसाहित्ये सप्तमाष्टमशतकवर्तिनमनेहसमासाद्य पूर्णतया विकासमुपेतमवलोकितमभूत्।

इदानीमपि संस्कृतगद्यनिबन्धने तत्संवर्धने तत्परिष्करणे तत्प्रचारणे च

-सुरभारतीचरणानुरागिणो मनीषिणो यतमानाः प्राप्यन्ते। अम्बिकादत्तव्यासस्य शिवराजविजयप्रबन्धोऽनेकनवानवशैलीसुशोभितप्रौढगद्यस्य स्पृहणीयं निदर्शनम् ईक्ष्यते।

साम्प्रतिकेषु गद्यकविषु पण्डिता क्षमा च परमसम्माननीयं स्थानमध्यास्ते। सा चिरपुरातन्यां भाषायां नवान् एव प्राणान् सञ्चारयन्ती दृश्यते। तदीये गद्ये इदानीन्तनजगदभिमता वर्णनशैली विज्ञानानुमोदितविचारणानां मधुरिमा प्रगतिप्रिया च दृष्टिः सर्वत्र समुल्लसति। तदीया कथामुक्तावली घटनावैचित्र्य-विचित्राणां सभाजितमनोऽभिरुचीनां कथानां कमनीयः संग्रहः।

विंशे शतके सञ्जातः पण्डितो हृषीकेशशास्त्री प्रबन्धमञ्जर्यां यच्छ्लितं निबबन्ध गद्यं तत्र सामयिकेषु विषयेषु सुरुचिरुचिरान् निबन्धान् निबध्नता तेन सरसायां व्यंग्यवत्यां प्रवाहशीलायाञ्च शब्दावल्यामवतार्य्य संस्कृतगद्यस्य श्रीः अपूर्वामेव चमत्कृतिं प्रापितास्ति।

अन्ये चास्मिन् काले पं० रामस्वरूपशास्त्रि-ब्रह्मानन्दशुक्ल-वेङ्कटराघव-नारायणशास्त्रिखिस्ते-द्विजेन्द्रशास्त्रि-विद्याधरशास्त्रिप्रभृतयः शतशः सुधीन्द्राः गद्य-साहित्यं वर्धयन्तः समवलोक्यन्ते। एवंस्थिते कथं हि वक्तुमिदं शक्यं यत् संस्कृतभाषायाः संस्कृतसाहित्यस्य च प्रसारो निरुद्धतां गतोऽस्ति।

प्रार्थ्यते परमेश्वरो यद् भारतीयाः स्वकीयभारतीयसंस्कृत्यां संस्कृतभाषा-याञ्च दृढं सत्यं स्नेहं निबध्नीयुर्येन संस्कृतगद्यमेधेत भारतस्य चास्य प्राप्तायाः स्वतन्त्रतायाः श्रीः विश्ववन्दनीयं च गरिमाणं प्रपद्येत।

( ४३ )

## कादम्बरी

संस्कृतगद्यकाव्यस्य श्रियश्चरमोत्कर्षो बाणस्य कृतिषु पर्यवेक्ष्यते। बाणात् प्राग् ये केऽपि गद्यकवयः प्रादुर्बभूवुस्तेषां सर्वेषामपि गद्येषु या या विशिष्टताः सुन्दरताश्च शोभन्ते तास्ताः सकला अपि विशिष्टताः सुन्दरताश्च ललिततरताम-वदाततरतामुत्कृष्टतरताञ्च गमितास्तत्र भासन्ते। केवलमेतावदेव न, यद् बाणात् प्राक् सञ्जातानां गद्यकाराणां कवीनां कृतिषु न तत् सौन्दर्यं वीक्षितं भवति यद् बाणस्य रचनासु राजते अपि तु तदुत्तरकालवर्तिनामपि गद्य-कवीनां काव्येष्वपि न सा आभा आभासते या बाणस्य। तस्माद् गद्य-कविषु बाण एव श्रेष्ठः। यत् किमपि दृश्यं यत् किमपि वस्तुजातं, यत् किमपि तत्त्वं, या कापि घटना, या कापि स्थितिः यः कोऽपि लौकिकोऽलौकिको वा विषयस्तस्य पुरस्ताद् वर्णनीयत्वेनोपपादनीयत्वेन च समुपतस्थुस्तेषां निखिलानामपि वर्णनं येन येन प्रकारेण येन येन साधनेन येन येन च चारुतमेनोपक्रमेण सर्वाङ्गीणतया भवितु-मर्हति सः सः प्रकारस्तत् तत् साधनं स स च उपक्रमो गद्यकविकुलतिलकेन पण्डितपुरन्दरेण महाकविना बाणेनाभ्युपागामिषत।

बाणकविकृतासु रचनासु कादम्बरी हर्षचरितञ्च नितरां प्रसिद्धे श्रेष्ठे च रचने स्तः। एतयोर्हर्षचरितम् आख्यायिकाकाव्यं, कादम्बरी च कथाकाव्य-मस्ति। गद्यकाव्यस्याख्यायिकाकथाभेदेन महाकविर्बाणस्तद्भेदद्वयमधिकृत्य गद्यकाव्यमसृजत्। प्रणयने च आख्यायिकायाः कथायाश्च, तां महनीयां नदीष्णतां जग्राह यया गद्यकलाकामिन्याः सर्वं सर्वविधमपि सौन्दर्यं स्वकीये पूर्णे तारुण्ये समुन्मीलितं भवत् सचेतसां पुरः प्रस्फुरेत्। कविः स्वीयेऽस्मिन् प्रयासे सर्वथैवानन्यलब्धां श्लाघनीयां सफलतामधिजगाम।

कृतेः समुत्कृष्टतरतायै रसात्मकत्वमपेक्ष्यते। इदं सौन्दर्यं बाणस्योपरि निर्दिष्टयोरुभयोरपि रचनयोः समुल्लसति। एतादृशस्य सौन्दर्यस्य समुत्पादनाय कलायाः कमनीयता भावानां च भव्यताऽपेक्ष्येते कवेरस्य काव्ये द्वयमप्येत-न्मनोभिरामां धीविस्मयविधायिनीं लक्ष्मीं परिष्वजमानं समवाप्यते। एतस्य हि

कवेः सकलसुधीजनवन्दिताङ्घ्रेः कवितायाः अनवद्यां बन्धुरतां निभालयितुं तदीया कादम्बरी एवालं भवेत् तस्मात् सैवालम्ब्यते । तामेव तु, लक्ष्यीकृत्योक्तमिदम्—

"कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयम् ।"

कादम्बरी संस्कृतगद्य-साहित्यस्य समुज्ज्वलं रत्नमस्ति । तत्र भाषा भावेन भाति, भावश्च भाषया । शब्दार्थयोरुभयोरपि नितान्तमेव श्लाघनीयो योगस्तत्र दृष्टिपथमवतरति । वर्णनानां सुन्दरता अनिर्वचनीयैव । क्वचिद् विन्ध्याचलस्य विकटाटवी साहससंलग्नं भीत्युत्पादनकरं शबरसैन्यं च वर्ण्यते तु क्वचित् सदयताया अवतारो धर्मस्य साकारं रूपम्, आध्यात्मिकताया देदीप्यमानं निदर्शनं मुनिर्जाबालिस्तदीयश्च परमपावनो मनश्चौर्यचणः सुभगशोभाशुभ्र आश्रमः सर्वेषां मनांसि रमयति । क्वचिद् बाल्ये गन्धर्वोत्सङ्गलालितायाः कल-क्वणनकारिण्या वीणाया इव मञ्जुवादिन्याः स्निग्धस्वान्ताया महाश्वेताया विरह-विधुरा मूर्तिः संलक्ष्यते तु क्वचित् अलौकसामान्यानां सुखानां निचयमुपभुञ्जा-नाया गन्धर्वराजतनयायाः स्मरसमानसायाः कमनीयस्वरूपायाः कादम्बर्याः सरसा कथा श्रोतॄणां चित्तचञ्चरीकांश्चोरयन्ती दृष्टा भवति । सर्वत्रैवालङ्काराणां मधुरं शिञ्जितं श्रोत्रेन्द्रियं प्रीणाति; सर्वत्रैव रागात्मिकाया वृत्तेरभिव्यञ्जना हृदयमुन्मीलयन्ती विभाति । वस्तुतः कादम्बरी हि अलङ्काररसयोः प्रियेण प्रका-रेण मेलनकारित्वात्, भाषा-भावयोर्भव्यया पद्धत्या संयोजनकारित्वात्, कल्पना-वर्णनयोश्च विचित्रेण विधिना संश्लेषणकारित्वाच्च संस्कृतगद्यकाव्येषु अद्वितीयी एव रचना । रसिकमानसोन्मादनकारित्वान्नूनं कादम्बरी कादम्बर्येव ।

बाणः स्वकीयानां पात्राणां चरित्राणि चारुतयैव चित्रयति । सः अस्यामपि कलायां नितरां कुशलः । अत एव तस्य पात्राणि प्राणवन्तीव भूत्वा मञ्जुलमू-र्तिमन्तीव भूत्वा पाठकनयनालिन्दे अवतीर्णानि भवन्ति । प्रजापालनपरस्य महाराजस्य शूद्रकस्य वीरमूर्तिः कस्य न हृदये उत्साहं, सौम्यतापसो हारीतः कस्य न चेतसि प्रीतिं, ज्ञानवृद्धो जाबालिः कस्य न हृदि भक्तिं च सञ्चारयति ? अवदातचरितस्तारापीडः, शास्त्रे व्यवहारे च कुशलः शुकनासः, शुभ्राम्बरा तप-स्विनी महाश्वेता, कमनीया च कादम्बरी कुशलेन कविना स्वलेखनी-तूलिकया तथाऽऽलिखिता यत् तानि सर्वाण्यपि पात्राणि सचेतसां चेतःसु स्वीयममरं प्रभावं समुत्क्षिपन्ति ।

स एव वस्तुतस्तु कविः कविर्यो जगतो विविधान् अनुभवान् समवाप्य

तदीयहृदयस्पर्शिनः पक्षस्य सञ्चयने चतुरो भवति । अस्मिन् हि निकषे कर्षणात् वाणस्य कविता निर्दोषस्नातकुम्भमिव संसिद्ध्यति । कविर्बाणो यथा नानाविधं लोकवृत्तविषयकं ज्ञानं निदधाति तथैव स चमत्कारवर्षिणीं यथार्थतामपि परिपुष्णाति । तस्यामरे काव्ये सुख-समृद्धिसुन्दरं भोग-विलाससुलसितं जीवनमेकतश्चित्रितमस्ति, एकतश्च तपस्विनो हि पूतं चरितमालिखितमस्तीत्येतत् सर्वं कवेरनुभूतीनां विशालतां विविधतां यथार्थताञ्च लक्षयति ।

कादम्बर्यां प्रकृतेर्वर्णनमतितरां रमणीयं ललितञ्च भाति । केचन संस्कृतकवयः प्रकृतेर्मञ्जुलं रूपं चातुर्यां चित्रयन्तो वीक्ष्यन्ते; केचन तु तस्याः भयावहस्य रौमाञ्चकृतः स्वरूपस्य प्रदर्शने पटीयांसः प्राप्यन्ते परं वाणे हि उभयविधापि प्रवीणता विभ्राजते सः प्रकृतेर्मधुरं कठोरञ्च रूपं परमकौशलेन प्रदर्शयन् समवाप्तो भवति । एवंविधानां दृश्यानां स्वरूपाणि हृदयङ्गमानि कारयितुं कविना विविधा अलङ्कारा अवलम्बिताः । उपमोत्प्रेक्षाविरोधाभासपरिसंख्यालङ्काराणां स्तूपान् उत्थाप्य कविः पाठकानां पुरः स्वकीयान् वर्णनीयान् विषयान् मञ्जुलतयावतारयन् विलोकितो जायते । विन्ध्याटव्या भयङ्करतायाश्चित्रणं कविर्यत् परमसफलतया कृतवान् तत्तु मानसे परं विस्मयमातनोति भयेन च महता हृदयमापूरयति—

"नखमुखलग्नेभकुम्भमुक्ताफललुब्धैः शवरसेनापतिभिरभिहन्यमानकेशरिशता, प्रेताधिपनगरीव सदासन्निहितमृत्युभीषणा महिषाधिष्ठिता च, समरोद्यतपताकिनीव वाणासनारोपितशिलीमुखा विमुक्तसिंहनादा च, कात्यायनीव प्रचलितखड्गभीषणा रक्तचन्दनालङ्कृता च,⋯⋯क्वचित् प्रलयवेलेव महावराहदंष्ट्रासमुत्खातधरणीमण्डला, क्वचिद् दशमुखनगरीव चटुलवानरवृन्दभज्यमानतुङ्गशालाकुला⋯⋯ ।"

कवेस्तपोवन-वर्णनं सर्वविधप्रभावोत्पादकवर्णनीयविषयविभूषितमस्ति, तद् दृश्यं न कदापि विस्मरणीयं भवितुमर्हति यत्र जरदन्धतापसाः परिचितैर्वानरैर्दत्तहस्तावलम्बा भवन्तस्तपोवनं प्रवेश्यमानास्ततश्च निष्काश्यमाना दृष्टा भवन्ति । ऋतूनां वर्णनमपि परममेव मनोरमं कृतमस्ति । प्रभात-सन्ध्यान्धकारचन्द्रोदयादिसम्बन्धीनि प्राकृतिकानि दृश्यानि कविनातिशयसहृदयभावेन याथार्थ्येन च चित्रितानि सन्ति । अच्छोदसरोवर्णनेऽपि कवेः सूक्ष्मेक्षणशक्तेरगाधता सम्यग् वीक्षिता भवति । सरोवरस्य निर्मलजलत्वं प्रदर्शयितुं कविरुपमानामेकां महतीं शृङ्खलामेव दीर्घां व्यातन्वानो दृश्यते—

"मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, स्फटिकभूमिगृहमिव वसुन्धरादेव्याः, निर्गमनमार्गमिव सागराणाम्, निस्यन्दमिव दिशाम्, अवतारमिव जलाकारं गगनतलस्य, कैलासमिव द्रवतामापन्नम्, तुषारगिरिमिव विलीनम्, चन्द्रातपमिव रसतामुपेतम्, हराट्टहासमिव जलीभूतम्...... ।"

कादम्बर्यां प्रकृतेः सौम्यमुग्रञ्च रूपं यावत्या रुचिरतया चित्रितं तावत्यैव ललिततया तत्र विविधानां वस्तूनां वर्णनं कृतमवाप्यते। वर्णनानि संश्लिष्टानि प्रभावपूर्णानि च विधातुं भावांश्च भासुरीकर्तुं कविरुपमोत्प्रेक्षाश्लेषविरोधाभासादिकानामलङ्काराणां महत्या समीचीनया रीत्या प्रयोगं विदधानश्च वीक्ष्यते।

उपमामाश्रित्य इन्द्रायुधस्य वर्णनं कीदृशं मधुरं विहितं; दृश्यतां वर्णनम्—
"हरिचरणमिव सकलवसुन्धरोल्लङ्घनक्षमम्, वरुणहंसमिव मानसप्रचारम्, मधुमासदिवसमिव विकसिताशोकपाटलम्......सूर्योदयमिव सकलभुवनैर्घार्हम्...... ।"

तस्यैव वर्णनमुत्प्रेक्षामुखेन वीक्ष्यताम् ईषत्—
"अश्वालङ्कारनिहितमरकतरत्नप्रभाश्यामायमानदेहतया गगनतलनिपतितदिवसकररथतुरगशङ्कामिवोपजनयन्तम्, अतितेजस्वितया जवनिरोधरोषवशात् प्रतिरोमकूपात् समुद्गतानि सागरपरिचयलग्नानि मुक्ताफलानीव स्वेदलवजालकानि वर्षन्तम्...... ।"

राजकुलवर्णनं श्लेषेण क्रियमाणं मनाक् अवलोक्यताम्—
"राजकुलमिव भरतगुणानन्दितम्, ज्यौतिषमिव ग्रहमोक्षकलाभागनिपुणम्, नारदीयमिव वर्ण्यमानराजधर्म्मम्, यन्त्रमिव विविधशब्दरसलब्धास्वादम्, मृदुकाव्यमिवान्यचिन्तितस्वभावाभिप्रायावेदकम्, महानदीप्रवाहमिव सर्वदुरितापहरम्...... ।"

उज्जयिनीनगर्याः सौन्दर्यं विरोधाभासमाश्रित्य दर्शयति कविरेवम्—
"संगृहीतगारुडेनापि भुजङ्गभीरुणा, खलोपजीविनापि प्रणयिजनोपजीव्यमानविभवेन, वीरेणापि विनयवता, प्रियंवदेनापि सत्यवादिना, अभिरूपेणापि स्वदारसन्तुष्टेन, अतिथिजनाभ्यागमार्थिनापि परप्रार्थनानभिज्ञेन......विलासिजनेनाधिष्ठिता ।"

परिसंख्यालङ्कारस्य तु बाणः सम्राडेव प्रतीयते । यथाऽयं कश्चित् श्लिष्टपरि-

संख्याया विस्मयावहेन प्रकारेण प्रयोगं कुर्वाणो दृश्यते न कदाचित् तथाऽन्यः कविर्विचयमाणो भवति । परिसंख्या-सुषमा-प्रफुल्लिताः काश्चन गद्यपङ्क्तयोऽपि प्रेक्षयन्तां तारापीडवर्णनविषयिकाः—

"यस्मिंश्च राजनि गिरीणां विपक्षता, प्रत्ययानां परत्वम्, दर्पणानामभिमुखावस्थानम्, शूलपाणिप्रतिमानां दुर्गाश्लेषः, जलधराणां चापधारणम्, प्रतीहाराणामसिधारणम्, तैक्ष्ण्यमसिधाराणाम्, ध्वजानामुन्नतिः······करिणां दानविच्छित्तिः, अक्षक्रीडासु शून्यगृहदर्शनं पृथिव्यामासीत् ।"

रसनोपमाया अपि छटा चेदृशी यत् तस्या विनावलोकनं न सचेताः पुर उपसर्तुं शक्नोति—

"क्रमेण च कृतं मे वपुषि, वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकरेणेव मदेन नवयौवनेन पदम् ।"

अस्ति कादम्बरी हृदयपक्षप्रधाना गद्यकविता । कविः स्वपात्राणां मानसस्याभ्यन्तरे भागे तत्र प्रविशन् दृष्टो भवति । स तासु तासु अवस्थासु समुत्पद्यमानाः अन्तःकरणवृत्तीर्विशिनष्टि समुचितेन च पद-विन्यासेन ता अभिव्यनक्ति । पुण्डरीकं विलोक्य महाश्वेताया हृदये समुत्पन्नानां कियतां भावानां छविः प्रेक्षणीयास्ति—

"आसीच्च मम मनसि—'शान्तात्मनि दूरीकृतसुरतव्यतिकरेऽस्मिन् जने मां निक्षिपता किमिदमनार्येणासदृशमारब्धं मनसिजेन ।, एवञ्च नामातिमूढं हृदयमङ्गनाजनस्य, यदनुरागविषययोग्यतामपि विचारयितुं नालम्······कालो हि गुणश्च दुर्निवारतामारोपयन्ति मदनस्य सर्वथा ।"

पुण्डरीकस्य वियोगे महाश्वेताया हार्दिकानां भावानां या रम्याभिव्यक्तिरत्र दृश्यते सापि कवेर्बाणस्य लेखन्या अनुपम एव चमत्कारः—"अनया च मे दृष्ट्या दिङ्मोहभ्रान्त्येव प्रनष्टवर्त्मनः, बहुलनिशयेवान्धस्य, जिह्वोच्छित्त्येव मूकस्य, इन्द्रजालिकपिच्छिकयेवातत्त्वदर्शिनः ज्वरप्रलापप्रवृत्त्येवासम्बद्धभाषिणः, दुष्टनिद्रयेव विषविह्वलस्य, लोकायतिकविद्ययेवाधर्मरुचेः······दोषविकारोपचयः सुतरामक्रियत स्मरातुरस्य मे मनसः, येनाकुलीक्रियमाणा सरिदिव पूरेण विह्वलतामभ्यगमम् ।"

अनपत्यताजनितविषादविषण्णस्य तारापीडस्य हृदयगतानां मृदुलानां भावनानां चित्रणं नितरामेव रमणीयमवितथञ्च वर्तते—

"अहमपि खलु देवि!......कदा मे तनयजन्ममहोत्सवानन्दनिर्भरो हरिष्यति पूर्णपात्रं परिजनः। कदा हारिद्रवसनधारिणी सुतसनाथोत्सङ्गा द्यौरिवोदितरविमण्डला सबालातपा मामानन्दयिष्यति देवी......कदा च क्षितिरेणुधूसरो मण्डयिष्यति मम हृदयेन दृष्टया च सह परिभ्रमन् भवनाङ्गणम्"......।
"......शून्यमिव मे प्रतिभाति जगत्, अफलमिव पश्यामि राज्यम्। अप्रतिविधेये तु विधातरि किं करोमि, तन्मुच्यतां देवि! शोकानुबन्धः, आधीयतां धैर्ये धर्मे च धीः......।"

चन्द्रापीडस्य प्रथमदर्शनानन्तरं स्वदेशं निवर्तमाने सति तस्मिन्, कादम्बर्या भावानां चित्रणं कविर्यच्चकार तत् कवेर्मनोविज्ञानात्मकस्य विश्लेपणस्य प्रियं निदर्शनमस्ति—

"तिरोहितदर्शने च देवे,...प्रीत्या तं दिगन्तं दुग्धोदधिधवलैः प्लावयन्तीव दृष्टिपातैः, सितातपत्रापदेशेन शशिनेर्ष्यया निवार्यमाणरविकरस्पर्शा सुचिरं तत्रैव स्थितवती।...तमुपेत्य च 'देवेनात्र मरकतशिलामकरिकाप्रणालप्रस्रवणसिच्यमानहरितलतामण्डपे शीकरिणि शिलातले स्थितम्...किमपि चिन्तयन्ती...दुःखदुःखेन क्षणदामनैषीत्।"

"प्रेम भौतिकानां सम्बन्धानां न नामान्तरमिति बाणो मन्यते। तद्दृष्ट्यान्तु तत् जननान्तरे समुद्भूतः कश्चनाध्यात्मिक एव सम्बन्धोऽस्ति। कादम्बरी 'जननान्तरसौहृदम्' एव चित्रयति। एषा सा प्रेमकथास्ति या हि अतीतं विद्यमानञ्च परस्परं निबध्नाति। सा सन्दिशति यत् प्रेम न कदापि समाजस्य मर्यादामतिक्रमते। यत् 'प्रेम' इत्येतेन नाम्ना गीयते तद् भवति संयतं निष्कामञ्च। कालस्तद् विध्वंसयितुं न प्रभवति। तस्य स्मृतिस्तु शश्वत् प्रस्फुरन्त्येव अनुभूयते। समवाप्तानेकजनुःसंसिद्धिचारितार्थ्यं महाश्वेता-पुण्डरीकयोः कादम्बरीमहाश्वेतयोश्च प्रेम इत्यत्र विद्योतमानं प्रागवत् प्रमाणमस्ति।

कविना यस्य प्रणयस्यैषा मनोऽभिरामा कथा लिखितास्ति स प्रणयो बाह्याकर्षणप्रसूतो न, न च स रूपच्छटाराग एव। स तु अस्ति लोकोत्तरानन्दजनितविकारः। सः सचेतसश्चेतः सचेतसश्चेतसा निबध्नाति मिथः। स बहुजन्मव्यापि-

नीमभिव्यक्तिमादाय विजृम्भमाणो भवति। कादम्बर्याः प्रणयलीला नैकमेव जन्माभिव्याप्य सन्तिष्ठमानाऽस्ति सा तु जन्मत्रयवती वर्तते। सत्स्वपि त्रिषु जन्मसु जातेषु सा स्वकीये माधुर्ये न कीदृशीमपि तनुतामनुभवति। कामं शरीरं परिवर्ततां, कर्मवशाच्च प्राणी कामं नानायोनिषु विचरेत् परं तदीयं द्रढीयः प्रेम सदैव तमनुयाति। कादम्बरीकथाऽस्माकं पुरत इदमेव सत्यं निदधाति।

यौवन-धनैश्वर्य-दोष-निरूपणावसरे कविः काव्यमय्यां भाषायां नीतितत्त्वं नितरामेव ललितेन प्रकारेण सन्निदधाति। तत्रापि कविना रूपकस्योपमायाश्च निवेशस्तथा कृतो यद् यौवनस्य चाञ्चल्यं लक्ष्म्या उन्मादशीलत्वमैश्वर्यस्य च प्रमत्तत्वं युगपदेव साकारं भवत् स्वस्वविच्छित्तिपूर्वकं पाठकानामग्रे समुपस्थितं सञ्जायते। लक्ष्मीमुद्दिश्य कविः कथयति—

"इयं संवर्द्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरितचित्राणाम्, विभ्रमशय्या मोहदीर्घनिद्राणाम्, निवास-जीर्णवलभी धनमदपिशाचिकानाम्, तिमिरोद्गतिः शास्त्रदृष्टीनाम्......राहुजिह्वा धर्मेन्दुमण्डलस्य......।" वर्णनमिदं रूपकच्छटया रम्यमाणमास्ते। कवेर्विचारा महोदारा महोदात्ताश्च सन्ति। तस्य दृष्टिः अतिदूरदर्शिनी अस्ति। तस्य धीः ईदृशी निशितास्ति यत् किमपि वस्तु स्वकीयान् सर्वान् अपि गुण-दोषान् नैजं वैशिष्ट्यञ्च न कदापि संवरीतुं शक्नोति तस्याः पुरतः।

"कवेर्बाणस्य गद्यं हिंस्रसत्त्वसमाकुला भयावहारण्यानीव" इति केचन आलोचका यद् वदन्ति तत् ते कवेः समासबहुलानि ओजोगुणमण्डितानि स्थलान्येव विलोक्य वदन्ति। यत्र कविर्दीर्घदीर्घतरान् समासान् प्रयुयोज, ओजोगुणगुम्फितानि विकटानि वाक्यानि ससर्ज, विरोधाभास-श्लेषादीन् अलङ्कारान् आश्रित्य रचनाञ्चकार तानि स्थलानि सन्त्येवैवंविधानि। यदि तेषां वर्णनं तथाविधतया न विहितं स्यात् तदा तत्तद्वर्ण्यपदार्थानां यथार्थं स्वरूपं तद्गतञ्च वैशिष्ट्यं न कदापि साकारं भूत्वा सजीवञ्च भूत्वोपस्थितं भवितुं शक्नोति। यो विषयो यादृशो भवति, कुशलः कविस्तं तादृशं च विषयम्प्रति तदनुरूपामेव भाषां तदनुकूलामेव पद्धतिं तदनुगुणामेवाभिव्यक्तिविधामपि स्वीकरोति। अटवी-शबरसैन्य-राजकुल-दिग्विजय-चण्डिकामन्दिर-जरद्द्रविड-सन्ध्यादिकानि स्थलानि तादृश्यामेव पद्धत्यां कविर्निर्णयन् दृष्टो भवति यादृशी पद्धतिस्तदर्थमपेक्ष्यते। प्रभावशालिनां पदार्थानां प्रभावस्य प्रदर्शनं यदि वर्णन-

विधिः कर्तुं न क्षमते तदा-स वर्णनविधिर्व्यर्थ एव। अस्मादेव कारणात् कविः सर्वत्र विषयानुरूपमेव गद्यं निबबन्ध। आलोचका अविचारपूर्वकमेव अस्य कवेर्गद्यमालोचितवन्तः। संस्कृतसाहित्ये बाण इवान्यः कोऽपि प्रभावशालिगद्यलेखकस्तु दृश्यत एव न। आदर्शगद्यस्य यान् गुणान् कविर्हर्षचरिते उल्लिलेख ते गुणास्तस्य गद्ये वैशद्येन विद्यमानाः प्राप्यन्ते।

सन्देश-संलाप-विरहादिका विषया लघुलघुतरकलेवराणि वाक्यानि काङ्क्षन्ति। न ते दीर्घदीर्घतरान् समासान् अपेक्षन्ते न च ते विकटं पदबन्धम्। तस्मात् कविस्तद्विधेषु विषयेषु लघुलघुतरवाक्यानि प्रयुनक्ति न तत्र स समासान् दीर्घान् अवलम्बते न च विकटपद-संघटनामेवोपयुनक्ति। दृश्यताम्—

( क ) "किमिति निरर्थकमयमात्मा मया शिशुनेवायासितः। किमनेन गृहीतेनागृहीतेन वा किन्नरयुगलेन प्रयोजनम्। यदि गृहीतमिदं ततः किम्, अथ न गृहीतं ततोऽपि किम्।"

( ख ) कुमार, पूर्णा नो मनोरथाः। अधीतानि शास्त्राणि। शिक्षिताः सकलाः कलाः। गतः सर्वास्वायुधविद्यासु परां प्रतिष्ठाम्।

( ग ) "यदि सत्यमनया यथा कथितं तथा सर्वमवितथं स्वप्नदर्शनम्। अहं तु न श्रद्दधे। कुतोऽस्माकमियती भाग्यसम्पत्।"

इत्थमिदं स्पष्टमेव यद् बाणस्य वर्णनीयविषय-तत्प्रकटनप्रकारविधयोरन्तरालेऽद्भुतं सामञ्जस्यं शोभते। गद्ये हि, वस्तुतस्तु सूक्ष्मा निरीक्षणशक्तिर्मनोहारिणी वर्णनपद्धतिः, अक्षयशब्दराशिः, मधुराः कल्पनाः, मौलिकानामर्थानां संहतिर्वैशिष्ट्येन विभ्राजते। गद्ये महीयान् प्रभावः प्रवाहश्च वरीवर्तते। अनुकर्तारः कवयः कठोरतममपि प्रयासं विधाय स्वकीये गद्ये नैतस्य कवेर्गद्यस्य मध्ये समुच्छलन्तं तरलं चमत्कारं चपलं चारुत्वं सर्वदिग्गामिनीञ्चोद्भावनां जनयितुमशक्नुवन्। सचेतसो यन्माधुर्यं यमानन्दं याञ्च तृप्तिमेतस्य कवेः कवितायामश्नुवते न तन्माधुर्यं तमानन्दं ताञ्च प्रीतिमन्यत्र कुत्रापि विन्दन्ति ते। कविस्त्रिलोचनः सत्यमेवाचष्टे—

"हृदि लग्नेन बाणेन यन्मदो दुरतिक्रमः।
भवेत् कविकुरङ्गाणां चापलं तत्र कारणम्॥"

प्राचीन आलोचको धर्मदासोऽस्य कवेर्वाण्यां मुग्धो बभूव। स आनन्दनिमग्नो भवन् यदिदमाह तदक्षरशः सत्यम्—

"रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
सा किं तरुणी ? नहि नहि वाणी वाणस्य मधुरशीलस्य ॥"

राजशेखरस्य मते वाणस्य गद्ये पाञ्चाल्या भव्यं शुभ्रञ्च लावण्यं स्फुरति—

"शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरिष्यते ।
शिलाभट्टारिकावाचि वाणोक्तिषु च सा यदि ॥"

संस्कृतसाहित्यरूपरेखाकारेण चेदं यद् वाणस्य कवितामुद्दिश्याभिहितं तत् कियदुचितमस्ति—अनुगतालुगः सम्राडिव संस्कृतभाषा कविना प्रस्थाप्यमानास्ति कथा च पृष्ठतस्तेन छत्रधर इव प्रच्छन्नभावेन परित्यज्यमानास्ति ।

वाणस्य प्रतिभा सर्वव्यापिनी आसीत् । सा प्रस्तुतं सन्दर्भं न तावन्मुञ्चति यावत् भवति न सः पूर्णतयाऽऽलोड्यमानः । वर्ण्यस्य विषयस्य सर्वाङ्गीणतया वर्णनकारित्वादेव कविमिमं लक्ष्यीकृत्येयं श्लाघा श्रूयते—"वाणोच्छिष्टं जगत् सर्वम्" । वाण्याश्चरमसीमां गतो विकासोऽस्य कवितायां दृष्टो भवति तस्या उत्कृष्टतमोत्थानं तत्र विलोक्यैव आचार्यगोवर्द्धनः कविमिममेवं स्तवीति ।

"जाता शिखण्डिनी प्राग् यथा शिखण्डी तथाऽवगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी वाणो बभूव ॥

वाणकवितायाः सुमधुरसङ्गीतगायिकात्वात् तस्या अधरीकृतवीणामधुरक्वणनत्वाद् गङ्गादेवी तामेवं स्तौति ।

"वाणी - पाणि - परामृष्ट-वीणा - निक्वाण - हारिणी ।
भावयन्ति कथं वान्ये भट्टवाणस्य भारतीम् ॥"

वाणो विश्वप्रशंसितामिमां स्वकीयां कादम्बरीं नाम कवितां संवरीतुं न शशाक । तस्याः समाप्तेः प्रागेव सः संसारमिमं तत्याज । तस्मात्तत्सूनुः पुलिन्दभट्टस्तस्याः शेषभागं समाप्तिमनयत् । तत्पूरितोऽवशिष्टो भाग एष उत्तरार्धत्वेन प्रथते । उत्तरार्धारम्भे वाणतनयः पुलिन्दभट्टो लिखति—

याते दिवं पितरि तद्वचसैव सार्धं विच्छेदमाप भुवि यस्तु कथाप्रबन्धः ।
दुःखं सतां तदसमाप्तिकृतं विलोक्य प्रारब्ध एष च मया न कवित्वदर्पात् ॥

अहह, एतादृक् पितृभक्तो निःस्पृहश्च पुत्रः साहित्य-संसारे कदाचिदेव कोपि द्वितीयः स्यात् ! अथ च स पुनराह—पितुः कृपाप्रभावादेव तद्गद्यमिव गद्यं स्रष्टुमहं क्षमो जातोऽन्यथाऽहं तु कादम्बरीरसभरेण तथा मत्तः कृतोऽस्मि यत् किञ्चिदपि न चेतये—

कादम्बरीरसभरेण समस्त एव
मत्तो न किञ्चिदपि चेतयते जनोऽयम् ।
भीतोऽस्मि यत्र रसवर्णविवर्जितेन
तच्छेपमात्मवचसाप्यनुसन्दधानः ॥

बाणस्य विलक्षणप्रतिभापेशलत्वात् प्रकाण्डपाण्डित्यवत्त्वाच्च महाराजः श्रीहर्षवर्द्धनस्तस्मिन् अतितरां श्रद्धां न्यदधात् । सः तस्य परमप्रियपात्रं सम्मानास्पदञ्च बभूव । श्रीहर्षचरितं प्रणीय बाणोऽपि तं नितरां प्रत्युपचकार । सत्यमेवेदं बाणप्रशंसायां जगता गीयते—

हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां
श्रीहर्षेण समर्पितानि कवये बाणाय कुत्राद्य तत् ।
या बाणेन तु तस्य सूक्तिनिकरैरुट्टङ्किताः कीर्तय-
स्ताः कल्पप्रलयेऽपि यान्ति न मनाङ् मन्ये परिम्लानताम् ॥

# पण्डिता क्षमा

अस्मत्प्रिये भारते देशे भगवदनुक्रोशेन चिरन्तनादनेहसः पुरुषा इव पुरन्ध्रयोऽपि प्रौढपाण्डित्यवत्यः कवित्वशक्तिजुषः समये समयेऽजनिषत। पुरातनतमे वैदिकयुगे पुष्कला मन्त्रद्रष्ट्र्यो ब्रह्मवादिन्यो लोपामुद्रायमीप्रभृति विदुष्यः सम्बभूवुः—इति को न वेद वेदविद्यानुशीलयिता। राजर्षिजनकस्य सदसि ब्रह्मतत्त्वमधिकृत्य विमृशन्तीं मैत्रेयीं गार्गीञ्च को नाम नोपनिषत्साहित्यसेवी जानाति।

एष रामायणमहाभारतादिवर्ती समयस्तु अतिपुराणः। तस्य समयस्य तु इतिवृत्तमपि न प्रकाशे समुपतिष्ठते परं यदेतः कालात् पूर्ववर्तिनीं सहस्राब्दीं प्रति दृष्टिः क्षिप्यते तदाप्यस्माकमग्रे बह्व्यो महीयस्यो विदुष्य उपस्थिता भवन्ति। विजका-सुभद्रा-मोरिका-मारुला-शीलभट्टारिका-मधुरवाणी-गङ्गादिकाभिर्विचक्षणाभिर्गताः भूयस्यः शताब्द्योऽसम्पद्यन्तेत्येतत्साधु विदितमेव संस्कृतसाहित्येतिहासविदां पुंसाम्। नैवंविधः कालो यत्र नास्माकीनो देशस्तासां विदुषीणां ललनानामालोकेनालौकिकेनालोकितः सम्प्रत्यपि निर्मलश्यामरसादिकाव्यकारिण्यः श्रीनिर्मलाप्रभावती-प्रभृतयोऽनेकानेकप्रेक्षावत्यो विद्यावत्यः शास्त्रपारगामिन्यो देव्यो वीक्षिता भवन्ति। एतासु साम्प्रतिकीषु कवयित्रीषु अस्मद्गेयचरिता पण्डिता क्षमा विभ्राजते।

श्रीमती भारतनारीभूषणं विद्वदुत्तमा क्षमा स्वकीयेन पूतोद्भवेन पुण्यपत्तननामधेयस्य पत्तनस्य पुण्यं नवत्यधिकाष्टादशशततमेशवीये वत्सरे जुलाईमासे चतुर्थ्यां तारिकायां प्रगुणीकृतवती। तदीयाः पितृपादाः पण्डितप्रवरश्रीशङ्करपाण्डुरङ्गमहाभागाः संस्कृतभाषायाः महामनीषिण आसन्। भर्ता च तस्याः श्रीमान् डॉक्टर राघवेन्द्ररावः शल्यभिषग्वरेषु महतीं प्रतिष्ठां जगाहे।

मान्या श्रीक्षमा प्राच्यप्रतीच्ययोरुभयोरपि विद्ययोः श्लाघनीयमधिकारं न्यदधात्। भारतीयता तत्रातिशयभास्वरभावेन व्यराजत। सा भारतीयं जीवनं संस्कृतिञ्च प्रदर्शयितुमांग्लभाषायामनेककथानाटकादीनि व्यरचत्। संस्कृतभाषाया मृदुता भावाभिव्यञ्जनक्षमता गम्भीरगरीयस्कतादिका भूयिष्ठा विशिष्ट-

तास्तां नितरामावर्जयन्ति स्म। तस्मात् सा आंग्लभाषां विहाय स्वकीयाः कृतीः कर्तुं संस्कृतभाषामशिश्रियत्। संस्कृतभाषामुद्दिश्याधः स्थिताशयजुषं विचारमभिव्यानक्।

"संस्कृतभाषायाः शब्दकोषोऽन्यासां भाषाणां शब्दकोषेभ्यो गरीयान्; तत्र अभिव्यञ्जनायाः करणानि तेभ्यः करणेभ्यो महीयांसि बलीयांसि च विभान्ति यानि संसारस्य अन्या भाषा जुषन्ते। अस्मादेव हेतोः संस्कृतभाषा लक्षशो वर्षाणि यावद् अखिलमपि विश्वमैक्यसूत्रेण निबन्धुं प्रबभूव। सङ्घटनात्मकबलशालित्वं तस्याः, तस्या जीवितभाषात्वमभिव्यनक्ति। अविदितगुणापि सा जननिकरकर्णकुहरेषु वमति मधुधाराम्। सकलमपि भूभुवनं तस्या जीवनं लभते। भौगोलिक्या ऐतिहासिक्या च दृशा उभाभ्यामपि दृग्भ्यां सा चमत्कारं वितनुते। काश्मीरप्रदेशात् कन्याकुमारीं यावत् पाञ्चालेभ्यः कामरूपान् यावत् भासमानाः सर्वा अपि भाषाः अभिव्याप्य सा विभ्राजते। तत्र भारतस्य त्रयोऽपि कालाः प्रतिबिम्बिता भवन्तो युद्धासन्ते। तत्र क्वचिद् वैदिकस्य भारतस्य उषा सम्पूर्णेऽपि संसारे चेतनां सञ्चारयन्ती प्रकाशं वर्षन्ती गतिं प्रीतिञ्च उद्गिरन्ती निरन्तरम्, क्वचित् तत्रौपनिषत्की निरस्ततमस्का ज्योतिःश्रीः भुवनानि विद्योतयन्ती, क्वचिद् रामायणकथा मानवादर्शश्रियं वितन्वन्ती क्वचित् महाभारतघनघटा स्वयुगस्य चञ्चटामुन्मेषयन्ती, क्वचिद् बौद्धकालस्य लक्ष्मीः स्ववैभवं विकिरन्ती, क्वचिद् गुप्तसम्राजां च प्रतापप्रभा पुरः स्वयशः प्रसारयन्ती दृग्गोचरीभवति यथा तत्रोज्ज्वलातीतस्य छविर्वीक्ष्यते तथैव तत्र वर्तमानगान्धियुगस्यापि कान्तः प्रकाशः प्रस्फुरति; आशास्यते च तत्र तदपि भाविकाले कमनीयं जगद् वीक्ष्येत यत्र सर्वेऽपि संस्कृतं भाषमाणाः श्रुता भविष्यन्ति।

कवयित्री क्षमा महाराष्ट्रवासिनी महिलाऽसीत्। तस्याः शैशवं सौराष्ट्रेषु व्यतीयाय। प्रकृत्या सा दीन-दरिद्रवत्सलासीदतस्तदीये साहित्ये सर्वत्र दीन-दरिद्रजनोद्धरणभावनामन्दाकिनी प्रवहन्ती दृश्यते। प्राचेतसं महर्षिं वाल्मीकिं यथा क्रौञ्चवधो रामायणं नाम काव्यं स्रष्टुं प्रसभं प्रवर्तयामास तथैव रसिकामिमां क्षमामपि भारतौकसां दैन्यं दारिद्र्यञ्च काव्यानि अवतारयितुं प्रेरयामास। तीक्ष्णप्रतिभापेशलत्वात् सा अचिरेणैव कालेन पुष्कलं लोकप्रियं साहित्यं ससर्ज। अद्यपर्यन्तं तद्रचिता इमा रचनाः प्रकाशमायाताः सन्ति—

(१) सत्याग्रहगीता, (२) कथामुक्तावली, (३) कथापञ्चकम्,

( ४ ) विचित्र परिषद्यात्रा, ( ५ ) शङ्करजीवनाख्यानम् , ( ६ ) मीरालहरी, ( ७ ) उत्तरसत्याग्रहगीता, ( ८ ) तुकारामचरितम् , ( ९ ) रामदासचरितम् , ( १० ) ग्रामज्योतिः, ( ११ ) ज्ञानेश्वरचरितम् , ( १२ ) एकाङ्किसप्तकम् ।

काश्चन रचनाः सम्प्रत्यपि प्रकाशं न गताः सन्तीत्यपि कथ्यते। क्षमादेव्याः साहित्यं काव्य-कथा-गीति-नाटक-विविध-प्रकीर्णकाख्येषु पञ्चसु भागेषु विभक्तमस्ति ।

काव्यम् : सत्याग्रहगीता नाम तदीयं काव्यं त्रिभागात्मकं विद्यते । तत्र गान्धियुगं चित्रितमस्ति । प्रथमे भागे महात्मनो गान्धिन एकत्रिंशदधिकैकोनविंशतिशततमेशवीयात् प्राग् विहितानि राजनीतिकानि गान्धीरविन-सन्धि-प्रभृतीनि कार्याणि गीतानि सन्ति । द्वितीयभागे—उत्तरसत्याग्रहगीतायाम्—एकत्रिंशदधिकैकोनशततमेशवीयाब्दात् चतुश्चत्वारिंशदधिकैकोनविंशतिशततमेशवीयाब्दं यावन्महात्मा गान्धी हरिजनोद्धार-हिन्दीभाषाप्रचार-स्वदेशीयवस्तु-प्रसार-वैदेशिकवसनबहिष्कार-विविधराष्ट्रियसंस्थोद्योगशालादिप्रतिष्ठापनादिकानि यानि महान्ति कार्याणि कृतवान् तानि तत्र वर्णितानि सन्ति। तृतीयभागे–जय-सत्याग्रहगीतायाम्—महात्मगान्धिना सञ्चालितेन सत्याग्रहान्दोलनेन समवाप्तस्य स्वातन्त्र्यस्य कीर्तनं, साम्प्रदायिकताजनितविकाराणां चर्चा, महात्मनो बलि-दानञ्च गीतमस्ति ।

क्षमा निसर्गतः कवित्वशक्तिं समवाप। सा तां सामयिककाव्य-प्रणयने प्रयुयोज। संस्कृतसाहित्ये तदीया रचनाः सन्ति सर्वथैव अभिनवाः। तत्र नवनवा भावोद्भावनपरा ऊहाः शोभन्ते। कथावस्तूपन्यासप्रकारश्च सर्वथैव नवीनो भाति। सर्वत्रापि स्वाभाविकतया वैज्ञानिकतया ललितया च रीत्या-गेयवस्तूनां प्रकथनं कृतमस्ति । तत्र भारतीय-संस्कृत्याः सभ्यतायाश्च उत्कृष्टतामुद्धातुं यः स्तुत्यः पन्थाः स्वीकृतो वर्तते स आधुनिकमनोवृत्तिं नितान्त-सरलतया स्वाधीनां कर्तुं क्षमः ।

साम्प्रतिके समये ये केऽपि श्रेष्ठाः संस्कृतसाहित्यकाराः सन्ति तेषु क्षमा-देव्येव अग्रगणनीयास्ति। संस्कृतसाहित्यरसज्ञाः तत्साहित्याद् यां मुदं प्रीतिञ्च लभन्ते न तां कस्मादप्यन्यस्मादाधुनिकात् कव्यन्तरविरचितात् साहित्यात्। १९४४ तमेशवीयाब्दे दक्षिणभारतान्तर्गतत्रिवेलेनूरस्थ-गान्ध्याश्रमप्रार्थनया संस्कृतकविभिः संस्कृतभाषायां यानि गान्धिजीवनचरितविषयकाणि काव्यानि

प्राणीयन्त निर्णेतारस्तेषां काव्यानां मध्ये हि एतत्प्रणीतमेव काव्यं श्रेष्ठकाव्यत्वेन निर्णीय एनामेव कवयित्रीं प्रथमेन पुरस्कारेण सम्मानयन्तिस्म।

डॉ० राधाकृष्ण-एम० आर० जयकर-झोपाह्वामरनाथप्रभृतयोविद्वद्धुरेयाः क्षमायाः कवित्वशक्तिं पुनः पुनः प्रशंसन्तः श्रूयन्ते। नात्र संशयो यत् तदीयाः कृतयः साम्प्रतिके युगे पुनः संस्कृतभारत्यां प्राणान् प्रातिष्ठिपन्। वर्तमानेऽनेहसि प्रणीतेषु संस्कृतकाव्येषु प्रायेण परम्परागता रूढिवादितैव प्रतिलक्ष्यते। परं क्षमायाः काव्येषु तु सर्वत्र प्रगतिवादिता शङ्खं धमन्ती श्रूयते। इदानीन्तनस्य कस्य काव्ये दीनजनानामार्तनादः श्रुतो भवति? कः कविर्निःस्वानामपि दिगम्बराणामपि दुर्बलानामपि दयनीयाया दशाया वर्णने स्वकीयं स्वान्तमावर्जयन् समवाप्यते? इयं क्षमैव दरिद्रभारतस्य कारुणिकीं मनोमर्मभागभिदुरां कथामस्मत्पुरः साम्प्रतं निदधानावलोक्यते। एतस्या एव काव्ये—

"ध्यायं ध्यायं दशां दीनां बन्धूनां दुःखितोऽभवत्।
तदुद्धारमनुध्यायन् विनिद्रोऽगमयन्निशाम्॥"

× × × ×

यावन्न वेष्टिताः सर्वे बन्धवो मे यथोचितम्।
स्थास्यामि स्वल्पवेशोऽहमिति तेन धृतं व्रतम्॥

इत्येतद्विधा वर्तमानभारतस्थितिप्रदर्शनकारिणः श्लोकाः समवाप्यन्ते।

इयमेव विदुषी अस्त्येवंविधा यदीये काव्ये पारतन्त्र्यं मरणादपि अतिरिच्यते इत्येतच्छ्रूयते—

"जीवन्तोऽपि न जीवन्ति परदास्यधुरन्धराः।
पारतन्त्र्यमुदाराणां मरणादतिरिच्यते॥"

कतमत् आधुनिकं काव्यं स्वातन्त्र्यस्य महत्तां परमनिर्भयभावेन संस्थापयति—

"स्वातन्त्र्याद्धि मनुष्याणां प्रियमन्यन्न विद्यते।"

स्वदेशार्थं स्वार्थत्यागस्योपदेशः केनान्येन संस्कृतकाव्येन प्रदीयते—

"स्वार्थत्यागात् स्वदेशार्थं नान्यच्छ्रेयो हि विद्यते।"

कस्मिन् हि अन्यस्मिन् काव्ये वैदेशिकानां वसनानां दहनं दृष्टिगोचरं भवति—

"परदेशीयवस्त्राणि निर्दह्य बहवो जनाः।"

कुत्र च काव्ये 'खादी'तिनामधेयेन विश्रुतानि वसनानि वसानानां देशसेवकानामाभा दृश्यते—

"श्वेतखादिधराः सन्तः सञ्जाता देशसेवकाः ।"

क्व हि तन्तुचक्रस्य गुञ्जनमेतस्याः काव्यादन्यत्र श्रूयते—

"गुञ्जनं तन्तुचक्रस्य श्रूयते स्म गृहे गृहे ।"

एतदीयं हि आदर्शकाव्यम्—

"शूद्रो वा ब्राह्मणो वापि क्षत्रियो वा कृषीवलः ।
देवदृष्टया समाः सर्वे विकृतिस्तु नरोद्भवा ॥"
भेदः कृतो मनुष्येण न धात्रा समदर्शिना ।
शीलं चिह्नं सुजातस्य न जातिर्न च जीविका ॥
अतोऽन्त्यजानवज्ञातुं नाधिकारोऽस्ति कस्यचित् ।
अमी मलिनकर्मार्हा इत्युक्तिर्ननु किल्बिषम् ॥"

इत्यादिभिः श्लोकैर्जातिवादमन्त्यजावज्ञाञ्च निन्दत् क्वचित् ;

"हिंसां न कोऽपि कुर्वीत मनोवाक्कायकर्मभिः ।
अहिंसयैव सिद्धिः स्यादित्याह गुरुः पुनः ॥"

इत्यादिना हिंसाया हेयतां किञ्च अहिंसाया ग्राह्यतां क्वचित् ;

"बलं सर्वबलेभ्योऽपि सत्यस्यैवातिरिच्यते ।
सत्यवानबलः श्रेयान् सबलात् सत्यवर्जितात् ॥"

इत्यादिना सत्यस्य प्रकृष्टतामुपन्यस्यच्च क्वचित् प्राप्यते । एतावदेव न, अस्यास्तु काव्यमस्माकमग्रे देशार्थमसूनपि जुह्वतस्तरुणान् दर्शयति; तत् तान् मानवान् अतितरां भर्त्सयति ये सन्ति तु खैस्तधर्मावलम्बिनः परं दिवानिशं हिंसात्मकानि कठोराणि कर्माण्यनुतिष्ठन्ति निपीडयन्ति च मानव-जातिमन्याय-मत्याचारञ्च विधाय । अतः काव्यमिदं मानवं तत्कर्त्तव्यमार्गं दर्शयति । राष्ट्रियता-भावविभाविता पावनप्रेरणा कस्मादपि नान्यस्मात् साम्प्रतिकात् संस्कृतकाव्यात् संलब्धा भवति ।

अहह क्षमायाः काव्यमधीत्य तु नः पुरतः श्रीमद्भगवद्गीतायाः आनन्दा-मृतकणानां वर्षेव भवितुमारभते । दृश्यताम्—

स्वधर्मं प्रतिपद्यध्वं पुरुषत्वं च रक्षत ।
अहिंसका जितक्रोधाः प्रवर्तध्वं स्वकर्मणि ॥
अपमानमिमं सोढुं कथं शक्नुथ बान्धवाः ।
त्यक्त्वाधिकारिणो भीतिमुत्तिष्ठत सपौरुषम् ॥

साहित्यं स्वयुगस्य मुकुर इति सत्यमेवोक्तं केनापि। क्षमादेव्याः कृतयो यदापि पठिताः स्युस्तदा पाठकास्तत्र स्पष्टमेव नितान्तसरलतया गान्धियुगस्य भारतं द्रष्टुं प्रभवेयुः। तेषां पुरः समग्रमपि भारतं सजीवं चित्रमिव भूत्वा समुपतिष्ठेत्। ते तद् विलोक्य ज्ञास्यन्ति आंग्लशासनस्य दमनं, कृषीवलानां शोचनीयां दशां देशस्य च कारुणिकीमवस्थाम्। यथा चित्रशालामधिष्ठिता जनाः पटोपरि प्रतिबिम्बितानि अनवच्छिन्नतया एकैकशो बहूनि चित्राणि पश्यन्ति तथैव क्षमादेव्याः साहित्यमपि चित्रशालास्ति। तत्र दर्शकः कस्मिंश्चिच्चित्रे सन्मार्गम्प्रति आंग्लशासनमानेतुं प्रयतमानं महात्मानं गान्धिनम्, कस्मिंश्चिच्चित्रे हरिजनान् उद्धरन्तं तम्, कस्मिंश्चिच्चित्रे देशे सर्वत्र विततमस्पृश्यताभावं निवारयन्तं तम्, कस्मिंश्चिच्चित्रे मानवीयान् अधिकारान् आंग्लजातिं याचमानं सविनयं तम्, कस्मिंश्चिच्चित्रे देशस्वातन्त्र्याय कारागारीयकष्टानि सहमानं तम्, कस्मिंश्चिच्चित्रे देशभक्तान् बहून् बहुविधानि दुःखानि सहर्षं निषेवमाणान्, कस्मिंश्चिच्चित्रे प्राणान् अपि जुह्वतोऽनेकान् तरुणान्, कस्मिंश्चिच्चित्रे दीन-दरिद्र-विधवादिवृन्दं सकरुणं क्रन्दत, वैदेशिकवस्त्रादि-निरोधनाय देश-सेवकान् कठोरं प्रयत्नं विदधानांश्च, कस्मिंश्चिच्च चित्रेऽन्यानि च बहुविधानि देशस्य शोचनीयानि मनोमर्म्मभागातिपीडकानि दृश्यानि दर्शं दर्शं नितरामेव व्यथामनुभवति। वस्तुतः क्षमादेव्या रचनाः पाठकस्य हृदये देशभक्तिं प्रगाढां समुत्पादयन्ति। ता अधीत्य मानवो न कोऽपि कदाचिदेवंविधो यो देशानुरागी न स्यात्। ता मानवस्य हृदयादसद्भावान् दूरीकृत्य तन्निर्मलं कर्तुं क्षमाः सन्ति। ता मानवं सङ्कीर्णतातोऽनुदारतातः क्षुद्रतातश्च निर्गमय्य तमुदारे पवित्रे विकारविहीने क्षेत्रेऽवतारयन्ति। तस्माद् वस्तुतः क्षमादेव्याः काव्यानि दर्शनग्रन्था इव सन्ति। आधुनिकं युगं काव्ये यां यां विशिष्टतां दिदृक्षते तां तां विशिष्टतां तत्साधु समवाप्नोति।

पण्डिता क्षमा यथा सत्याग्रहगीतादिकाव्यानि प्रणीय संस्कृतकाव्यसाहित्यसंसारे अदृष्टपूर्वामेव छटां व्यतनोत् तथैव सा कथानां सृष्टिं विधाय संस्कृतकथासाहित्यसंसारमपि नूतनयैव कयापि अतुलयैव भव्यविभया व्यभूषयत्। भारतभूषा क्षमा स्वकथासाहित्यरचनया संस्कृतकथासाहित्यस्य गरिमाणमुदनमयत्। संस्कृतसाहित्ये कथानामपि यद्यपि प्राज्यता प्रेक्ष्यते चिरन्तनात् कालात् परम् आधुनिकः पाश्चात्यः संसारः कथोल्लेखनस्य यां विधां यां पद्धतिं यां च नूतनामेव

विच्छित्तिमवलम्बते प्राचीनं संस्कृतकथासाहित्यं न तस्यां विधायां न तस्यां पद्धत्यां न च तस्यां विच्छित्यां सृष्टमवाप्यते। पण्डिता क्षमा संस्कृतकथासाहित्यं हि आधुनिककथा-साहित्यस्याभिर्विशिष्टताभिरलङ्कृतवती। सा तत्र मानवहृदयस्य तत्पक्षं सन्निवेशयितुं प्रायतत यस्य पक्षस्याविर्भावनं प्रतीच्येभ्यः कथारसिकेभ्यो भृशं रोचते।

मानवः परिस्थितीनामस्ति किङ्करः। तं सांसारिकं वैभवमनायासेनैवाक्रष्टुं शक्नोति; प्रकृतिदौर्बल्यात् स इन्द्रियाण्यपि नावज्ञातुं प्रभवति; विपदि सः क्षिप्रमेव धैर्य्यबलं मुञ्चति; धनं तं स्वदिशं, सौन्दर्यं तं स्वामाशां, पदं तं नैजदिशां, लोकख्यातिसौभाग्यलोलता च तं स्वककुभमाकर्षन्ति नक्तन्दिवम् अतस्तदीयानां मानसिकगतीनां स्वरूपोद्भावनमतितरामपेक्ष्यते—इत्येषा विचारधारा साम्प्रतिके संसारे द्राघीयसी भूत्वा सर्वत्र प्रवहमाना केन न दृश्यते? पण्डिता क्षमा वर्तमानस्य लोकस्य रुचिं स्वादं प्रवृत्तिञ्च सम्यगधीतवती। मानवीया मनोवृत्तिः कुत्र रमतेऽतितरामित्येतद् विज्ञाय यदौषधं तस्य मनोमलिनतां परिमृज्य तद्धितं कर्तुं क्षमते तदेव सा उपायुनक्। सा स्वकथासाहित्ये मनो यां यां दिशां गच्छति यद् यत् कर्तुं तत् प्रवर्तते यद् यत् तत् प्रीणाति तत् सर्वमेव चित्रयतिस्म।

अत्र 'प्रेमरसोद्रेक' कथां पण्डितक्षमाप्रणीतां स्वदृष्टेः पुरः प्रतिष्ठाप्य एतत्प्रदर्शनस्य चेष्टा कृता स्यात् यदेतस्या विदुष्याः कथा वस्तुतस्ता उपर्युक्ताः सर्वा विशिष्टताः सन्निवेशयति याः खलु इदानीन्तनीं प्रतीच्यधरणीं रमयन्ति निरन्तरम्। वर्तमानं जगत् साधारणतमानां मानवानां जीवन-दर्शने रुचिं दधाति। तद् रजकानां चर्मकाराणां सूचिकाराणां श्रमजीविनामन्येषाञ्च निम्नतमश्रेणीसमुद्भवानां नराणां नारीणाञ्च दैनिके जीवने घटमानानां घटनानां वर्णने महतीं प्रीतिं निबध्नाति। तस्मात् कारणात् पण्डिता स्वीयप्रेमरसोद्रेककथायां मेषव्रजपालकस्य वृत्तं गायति। प्राचीनासु संस्कृतकथासु नैतादृशानि पात्राणि गेयत्वेन अवचितानि। तत्र नृपतीनामभिजातानामुच्चवर्णानां तपस्वि-भक्त-धार्मिकादीनामेव चरित्राणि चित्रितानि दृश्यन्ते न तत्र नृशंसो दस्युः, न पापीयान् वन्दी, न परनारीचौरः पामरः, न पतित्यक्ता वनिता, न च संसारयातनानिपीड्यमानविधवादिकानां समुदायो हि वर्णनीयविषयत्वेन परिगृहीतः।

कवयित्र्याः कथेयं कमनीया अस्मद्दृष्टिपथे हि एकां पतित्यक्तां नारीं किञ्च

कृषीवल-नाविकादीन् बहून् साधारणतमान् जनान् अवतारयति। अथ चैपा कथा शालिक्षेत्र-ध्वस्तदेवायतन-विशङ्कटगोष्ठ-पांसुलमार्ग-सुश्लिष्टगुल्मादिकानि दृश्यानि वितनोति। समग्रमपि वातावरणं ग्राम्यं विद्यते। न तत्र वर्त्तते धनधान्यसमृद्धानां नगराणां छटा। प्रायेणास्मदीयेयं धारणा यद् धैर्यं महत्स्वेव पुरुषेषु राजते न जनसामान्ये। इयं पण्डिता हामिदायां मेषव्रजपालिकायां दारिकायामपि तं गुणं दर्शयति। प्रायेण विश्वसिमो वयं यत् सुशिक्षिता जना एव अपरिचितेष्वपि जनेषु सद्मुदाचारं व्यवहरन्ति न तदितरे। परं कथाया अस्या लेखिका साधारणतमे स्थविरेऽपि सद्मुदाचारविधायिनीं धियं चित्रयन्ती दृश्यते।

मानवस्य मानसं दया-क्षमा-कठोरता-घृणा-स्नेहादीनां गुणावगुणानामास्पदं भवति—इत्येतद्धि तथ्यमेतस्यां कथायां समवाप्तं जायते। अत्र कथात एतस्याः काश्चन पङ्क्तय उद्ध्रियन्ते ताभ्यो मानवहृदयस्य ता विशिष्टता विदिताः स्युः—

( क ) "ततः क्षणमात्रं विमृश्य शङ्कां च दूरीकृत्य निबद्धपुरुषविमोचनपराभूत्।"

( ख ) "......परमवेदनया ध्रुवं पीडितोऽस्तीति प्रतीता च तत्क्लेशं प्रशमयितुं निश्चिकाय।"

( ग ) "......निर्गमात् प्राङ् मयावश्यं बालिकायै किमपि पारितोषिकं प्रदेयमिति मनसि कृत्वा स्वमहानुभावं दर्शयितुं वृद्धकृषीवलायासावाचख्यौ।"

( घ ) "अनपत्यासीन्मद्गेहिनी। तस्यावन्ध्यतयातिकुपितस्तां सार्धत्रयोदशवर्षेभ्यः प्राग् गृहान्निष्कासितवानहम्। नान्यां च कन्यां परिणीतवान्।"

( ङ ) "मृत्युवक्त्रात् परित्रातोऽस्मि तया। तस्या भावी भर्ता मन्नाविको भवत्विति।"

( च ) "दीयतां पञ्चशती रूप्याणामर्हते जनायान्यस्मै। यत्र मे पितामहस्य पितामह्याश्च निवासस्तत्रैव समुचितो ममापि। विद्यते हि दिष्ट्या पर्याप्तं धनमेतयोः सविधे मत्पोषणार्थमिति स—निश्चयं प्रोच्याग्रे च सपदि संप्लुत्योच्चैः स्थविरकृषीवलस्याङ्के सुखमुपाविशत्।"

पण्डितायाः क्षमायाः कथासु सौन्दर्यमिदमपि राजते यत् सा तत्र प्रथमं हि आदौ किमपि रहस्यबीजं वपति। एतत् कृत्वा सा पाठकानां मानसेषु कौतूहलं जनयति। कथाया घटनं तेन विधिना सा विदधाति यत् उत्तरोत्तरकौतूहलवर्धनकारित्वं कथायां सञ्चारयति। ततश्च अन्ततो नितान्तहृदयस्पर्शि रहस्यं समु-

द्घाटयति। पाठकाः कथामधीत्य निशम्य वा चकितचकिता इव भूत्वा कमपि विचित्रमेवानन्दमनुभवन्ति।

पण्डिता क्षमा सरसं सरलञ्च गद्यं निबध्नाति। तदीये गद्ये प्राञ्जलः प्रवाहः प्राप्यते। नैसर्गिकी छटा परिवीक्ष्यते। वर्णनक्रमो नातिदीर्घो न चातिह्रस्वो भवति। पाठकस्तत्र क्वापि न क्लाम्यति न ताम्यति अपि तु तत्पठनार्थं परमोत्साहमश्नुते। यद्यपि एतस्या मनीषिण्या गद्यं न श्लेषश्लिष्टं न अलङ्कारप्रभूतभारक्लान्तं न दीर्घदीर्घतरसमाससङ्कीर्णं खलु विलोक्यते परं पाठकानां मनो यथात्र रमते, सम्भवतो, न तथा तत्र तत्र रमते प्रीतिं वा विन्दति यद् भवति श्लेषसमासोक्तिविरोधाभासयमकादिभिराकीर्णम्। एतदीये गद्ये वस्तुतस्तु संस्कृतभारती प्रसन्नतां सुबोधतां च परिपुष्णन्ती प्राप्यते। अत्रोद्धरणद्वयमेव निधीयते येन पाठकाः गद्य-सौन्दर्य-सुधाकणिकाः काश्चन पातुं प्रभवेयुः—

( क ) "नास्मि किमात्मभरणक्षमा। चिराय त्वयात्रावस्थितम्। परिश्रान्तोऽसि। क्षुधार्तोऽपि स्याः। याहि गेहम्; याहि शीघ्रम्। तवाम्बा त्वदागमनोत्कण्ठिता त्वां प्रतीक्षमाणाऽसहाया स्थिता स्यात्··· ।"

( ख ) "सेयं सरोजलोचना कुन्दकुड्मलदन्तपङ्क्तिः प्रवालाधरा चञ्चलालका शिरीषकुसुमकोमला शारदकौमुदीव रुचिरा धैर्यशीलापि मृदुवचना धीरापि स्थिरमतिः स्नेहनिर्झरसम्प्लुता दमयन्तीव परमदमनशीला क्षमातलागता सुरसुन्दरीव कमनीया कृषीवलस्य क्षेत्रादिकार्येषु मुदा प्रयस्यन्ती सुखमास्त ।"

( प्रेमरसोद्रेकः )

पण्डितायाः क्षमायाः कथामुक्तावलीमुद्दिश्य सरदारपाञ्चिकर आह—"संस्कृतकथामुक्तावली आधुनिकस्य युगस्य सर्वोत्तमा रचनास्ति। एतदीया भाषा सरसा सरला प्रसादगुणगुम्फिता वर्तते। अत्र वर्तमानं भारतं नैजेऽनवद्ये स्वरूपे प्रतिबिम्बितं दृश्यते। वस्तुत एष कथासंग्रहः क्षमायाः पण्डितायाः संस्कृतसाहित्यस्य कृते अद्भुतं चिरस्थायि प्राभृतम्।"

गीतिः—मीरालहरी नाम गीतिकाव्यं गीतिकाव्येषु शुद्धसंस्कृतपदपङ्क्तिपावनमुच्चतमविचारविभावितमनवद्यकल्पनाकलितमास्ते। तत्र भावनानां विभाचमत्कारचञ्चलव्यङ्ग्यमञ्जुलता च अनुपमैव प्रेक्ष्यते। नूनं गीतिकाव्यमिदं प्रणीय अनया भावुकहृदयया संस्कृतगीतिकाव्यानां श्रीः संवर्द्धितैव।

नाटकं हि काव्यसाहित्यस्य श्रेष्ठमङ्गम्। पण्डितक्षमाया नाटकानि तत्प्रयो-

जनं समीचीनतया सम्पादयन्ति यद् हृदि निधाय नाटकानां सृष्टिर्नाटकाचार्यैः कृता। 'गिरिजयप्रतिजनबालविधवादिनाटकानि तदीयानि वर्तमानयुगस्य प्रतिनिधित्वमनुतिष्ठन्ति। एकाङ्कि साहित्यमपि तस्या एकाङ्किनाटककलायाः स्वीयमाभ्यन्तरं रूपं परिगृह्य दीप्यन्ते।

विविधरचनाः—विविधरचनासु इह पण्डितक्षमायाः पत्रभाषणादीनामन्तर्भावो भवति। इमानि च पत्रभाषणादीनि सन्ति महत्त्वशालीनि। एभ्योऽपि सर्वे आत्मानमुपकर्तुमर्हन्ति। प्रकाशिते सति एवंविधे साहित्ये लोको नूनं ततः कल्याणं स्वमर्जयितुं शक्नुयात्।

श्रद्धेया कवयित्री क्षमा न केवलं साहित्यं सृष्ट्वा स्वं देशमसेवत परं सा भारतभाग्यप्रकाशमहात्मगान्धिनो नायकत्वे ग्रामे ग्रामे नगरे नगरे च परिभ्रम्य स्वकीयैः श्रेष्ठैराचारैरुदारैश्च विचारैर्दास्यशृङ्खलानिबद्धायां जनतायां स्वातन्त्र्यप्रियतायाः स्फूर्तिमपि समुदपादयत्। सा भारतस्य प्रायेणाष्टादशभाषासु अभिज्ञतां न्यदधात् तस्मात् यत्रापि अगात् तत्र स्वविचारांस्तत्प्रदेशस्यैव भाषया प्रकटीकृतवती। तस्या देशभक्तत्वात् सच्चरित्रविदुषीत्वात् तस्या भाषणानि देशवासिनां मानसेष्वमोघं प्रभावमक्षिपन्।

इयं प्रतिभाशालिनी विद्वद्वन्द्या २२—४—५४ तमदिनाङ्के भूलोके निजकृतिकीर्तिं वितत्य तिरोहिताभवत्। भूषयतात् सदा भारतभुवं एवंविधाभिः संस्कृतविदुषीभिर्भगवान्।

## श्रीपण्डितराज-जगन्नाथः

जगति जलबुद्बुद्वत् कति कति न जनाः प्रतिक्षणमुत्पद्यन्ते विलीयन्ते च परं तेषामेव जनुर्धन्यं येषां जनुषा मातुर्भारत्या मन्दिरस्य विजयवैजयन्ती उत्तुङ्गतरा भूत्वा दोधूयते । श्रीपण्डितराजो जगन्नाथस्तेषु विद्वद्धौरेयेष्वन्यतमो जातो ये हि विपश्चित्तल्लजा यावदजीवंस्तावत् सरस्वत्याः कोशं स्वरचनारत्नैः सर्वथैव समर्द्धयितुमीहन्ते स्म । पद-वाक्य-प्रमाणपारावारीणानां पण्डितानां लोके सः स्वकीयामनन्यगामिनीमाभामाददानः शुशुभे । तस्मिन् विद्वज्जगदद्भुतां प्रतिभामद्भुतं पाण्डित्यमद्भुताञ्च प्रबन्ध-प्रणयन-प्रवीणतामवाप्नुत । वस्तुतः सुरसरस्वतीसाहित्याम्बरे तस्य पदमम्बरमणि-पदमिव निरतिशयया तेजस्वितया विद्योतते ।

"मूर्तिमतेव नवावासफलानमनःप्रसादेन द्विजकुलसेवाहेवाकिवाङ्मनःकायेन माथुरकुलसमुद्रेन्दुना रायमुकुन्देनादिष्टेन श्रीसार्वभौम साहिजहानप्रसादाधिगत'पण्डितराय'पदवीविराजितेन तैलंगकुलावतंसेन पण्डितजगन्नाथेनासफविलासाख्येयमाख्यायिका निरमीयत"—इत्येताभिस्तदीयाभिरासफविलासस्थाभिः पङ्क्तिभिस्तस्य शाहजहाँ-राजसभाधिष्ठितत्वं किञ्च तस्य तैलंगवंशावतंसत्वं स्फुटतयैव ज्ञातं जायते । "दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः" इत्येतेन च तदीयेन वाक्येन सः स्वकीयं नवीनं वयो दिल्लीश्वरस्य च्छायायामनैषीदिति भवति विदितम् । एतेन तस्य सप्तदशशतकवर्तित्वं च सिद्ध्यति ।

अधःस्थितेभ्यस्तत्कृतिविराजितेभ्यः श्लोकेभ्यस्तस्य 'कः पितासीत् का मातासीत्, को गुरुरासीत् , कीदृशश्च तस्मिन् प्रकाण्ड-वैदुष्यमराजत'इत्येतद्विषयकश्च संस्तवोऽतिसमासेन समवाप्यते :—

(क) तैलङ्गान्वयमङ्गलालयमहालक्ष्मीदया-लालितः
श्रीमत्पेरमभट्टसूनुरनिशं विद्वल्ललाटन्तपः ।
सन्तुष्टः कमलाधिपस्य कवितामाकर्ण्य तद्वर्णनं
श्रीमत्पण्डितराजपण्डितजगन्नाथो व्यधासीदिदम् ॥

(ख) श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः-
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत्।
देवादेवाध्यगीष्ट, स्मरहरनगरे शासनं जैमिनीयं
शेषाङ्कप्राप्तशेषामलभणितिरभूत् सर्वविद्याधरो यः॥

(ग) निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयात्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसां मनसापि गन्धः
कस्तूरिकाजननशक्तिभृता मृगेण॥

पण्डितराजो जगन्नाथ इमान् ग्रन्थान् व्यरचत्—

(१) गङ्गालहरी (पीयूषलहरी) एष ग्रन्थो गङ्गास्तवविषयकोऽस्ति।

(२) सुधालहरी (सूर्यप्रशस्तिरत्र वर्तते)।

(३) अमृतलहरी (अत्र यमुना स्तुतास्ति)।

(४) करुणालहरी (इह भगवतो विष्णोः स्तुतिः कृतास्ति)।

(५) लक्ष्मीलहरी (लक्ष्मी-प्रशंसायां रचितेयम्)।

(६) आसफ-विलासः (आसफखानस्य प्रशंसायां रचितः)।

(७) प्राणाभरणम् (कामरूपाधिपतिप्रशंसायामुपनिबद्धम्)।

(८) जगदाभरणम् (उदयपुराधीश्वरकर्णसिंह-सूनु-जगत्सिंहस्य वर्णनमत्र विहितम्)।

(९) चित्रमीमांसाखण्डनम् (अप्पयदीक्षितप्रणीत-चित्रमीमांसाख्यग्रन्थस्य खण्डनमिह दृश्यते)।

(१०) मनोरमाकुचमर्दनम् (भट्टोजिदीक्षितकृतस्य मनोरमाभिधग्रन्थस्य खण्डनरूपम्)।

(११) भामिनीविलासः (अत्र सन्ति गृहीताः करुणा-शृङ्गारनिर्वेदाद्यनेकविषयाः)।

(१२) रसगङ्गाधरः (अलङ्कारशास्त्रविषयकोऽयमद्भुतो ग्रन्थोऽस्ति)।

यमुनावर्णनपरकमपि ग्रन्थं गद्ये पण्डितराजश्चकार इत्येतद् विदुषां जगति श्रूयते परं साम्प्रतं न सः प्राप्यते। पण्डितराजोऽन्योक्ति-सम्बन्धिनीमपि रचनामेकां रचितवान्। एषा तदीया रचना सम्प्रति हि तस्मिन् संग्रहे संगृहीतास्ति

यत्र पण्डितराजप्रणीतानां कृतीनां संग्रहणं कृतं वर्तते। रसगङ्गाधरो नाम ग्रन्थो न पूर्णः प्राप्यते।

संस्कृतवाङ्मये गीतिकाव्य-प्रणेतारो ये सुप्रसिद्धाः भर्तृहरि-बिल्हणामरुक-हाल-धोयी-गोवर्द्धनाचार्य-जयदेवप्रभृतयः कवयोऽभूवंस्तेषु पण्डितराजस्य जगन्नाथस्यापि गणना सादरं गीतिकाव्यकोविदैर्विधीयते। पण्डितराजस्य गीतिषु रसिका आभ्यन्तरसौन्दर्यविषयिकामतिशयानन्दवर्षिणीं मधुरतां पिबन्ति। तदीया गीतयो हि सहृदयान् जयदेवं स्मारयन्ति। तदीयायां शैल्यां तदेव मनोज्ञत्वं तदेव प्राञ्जलत्वं दृग्गोचरीभवति यद् भर्तृहरेः शैल्यां शोभते। भव्यो भावभङ्गिमा प्रौढश्च पदविन्यासः सर्वत्रैव गीतिषु तदीयासु विलसति तस्माद् विपश्चितां मनांसि तस्य गीतिकाव्यानि नितरामेव प्रीणयन्ति। भामिनीविलासस्तद्रचित-मुक्तकगीतीनां रमणीयः संग्रहो वरीवर्ति।

(अ) तीरे तरुण्या वदनं सहासं
नीरे सरोजञ्च मिलद्विकासम्।
आलोक्य धावत्युभयत्र मुग्धां
मरन्दलुब्धालिकिशोरमाला:॥

(आ) रे चेतः कथयामि ते हितमिदं वृन्दावने चारयन्
वृन्दं कोऽपि गवां नवाम्बुदनिभो बन्धुर्न कार्यस्त्वया।
सौन्दर्यामृतमुद्गिरद्भिरभितः संमोह्य मन्दस्मितै-
रेष त्वां तव वल्लभांश्च विषयानाशु क्षयं नेष्यति॥

इत्येतादृशैर्भूयोभिर्भावबन्धुरैर्ललितललिततरैः श्लोकैर्विभूष्यमाणत्वाद् भामिनीविलासस्य, भावुकानां संसारं सोऽतितरामाह्लादयति।

पण्डितराजस्य कवितायां नैसर्गिकः प्रवाहः सर्वत्र प्रवहति। तत्र पदानां मनोऽभिरामा शय्या कल्पनायाश्च हृदयहारिणी चारुता चकास्ति। स महान् परमेशभक्त आसीत्; अत एव तद्रचितासु गङ्गालहरी-सुधालहरी-करुणालहरी-प्रभृतिकृतिषु भक्तिभावना प्राणमयी भूत्वा आनन्द-सुधासागरनिमज्जनक्षमगुणा च भूत्वा समुच्छलति। सः सकलमपि स्वाभिमानं विहाय समग्रमपि छल-कपट-दम्भादिदोषान् परित्यज्य नितान्तसरलहृदयतया आत्मसमर्पणधियं निधाय, स्वकीयान् भक्तिप्रवणान् भावान् स्तोत्रेषु समावीविशद् अतो भक्तिर्भावसूत्र उत्थाय रसपदवीमधिरूढासित। पिबन्तु सुधिय इह त्रि-चतुर्भक्तिसुधासीकरान्:—

(अ) अयि दीनतरं दयानिधे, दुरवस्थं सकलैः समुज्झितम् ।
अधुनापि न मां निभालयन् भजसे हा कथमश्रमचित्तताम् ॥
सुमहान्ति जगन्ति बिभ्रतस्तव यो नाविरभून्मनागपि ।
स कथं परमाणुदेहिनां परमाणोर्मम धारणे श्रमः ॥

(आ) नितरां विनयेन पृच्छ्यते सुविचार्योत्तरमत्र यच्छ मे ।
करितो गिरितोऽप्यहं गुरुस्त्वरितो नोद्धरसे यदद्य माम् ॥
न धनं न च राज्यसम्पदं नहि विद्यामिदमेकमर्थये ।
मयि धेहि मनागपि प्रभो करुणाभङ्गितरङ्गितां दृशम् ॥

(इ) निधानं धर्माणां किमपि च विधानं नवमुदाम्
प्रधानं तीर्थानाममलपरिधानं त्रिजगताम् ॥
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापं तव वपुः ॥

(ई) विषीदता नाथ विषानलोपम-
विषादभूमौ भवसागरे विभौ ।
परं प्रतीकारमपश्यताधुना
मयायमात्मा भवते समर्प्यते ॥

पण्डितराजो जगन्नाथोऽपि श्रीहर्ष-भवभूतिसदृशः स्वाभिमानशाली बभूव । सः संस्कृतसाहित्ये यथा पाण्डित्यकवित्वादिहेतोर्विश्रुतोऽस्ति तथैवासौ स्वगर्वोक्तिनिमित्तादपि विख्यातो वर्तते । वस्तुतस्तस्य गर्वोक्तयो न सन्त्यलीकाः । अवर्ततापि तत्रागाधं वैदुष्यं विलक्षणा च प्रतिभा तस्माद् गर्वोक्तिभिश्चेत् सः स्ववसतिस्थलीकृतस्तर्हि युक्तमेव तत् कृतम् । श्रूयतामेका तदीया गर्वोक्तिः—

गिरां देवी वीणागुणरणनहीनादरकरा
यदीयानां वाचाममृतमयमाचामति रसम् ।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-
रधुन्वन् मूर्धानं नृपशुरथवाऽयं पशुपतिः ॥

पण्डितराजोऽन्योक्तिप्रणयने च परामेव पटीयस्कतां गाहते । अन्योक्तिषु तदीयासु अपूर्वा मनोज्ञता विमलञ्च व्यङ्ग्यं विभाति । अतस्ताः प्रेक्षावतां कण्ठाभरणतां गताः सन्ति—

(क) आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्ति।
सङ्कोचमञ्चति सरस्त्वयि दीनदीनो
मीनो नु हन्त कतमां गतिमभ्युपैतु॥

(ख) नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत्।
विश्वस्मिन्नधुनाऽन्यः कुलव्रतं पालयिष्यति कः॥

(ग) पुरा सरसि मानसे विकचसारसालिस्खलत्-
परागसुरभीकृते पयसि यस्य यातं वयः।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम्॥

पण्डितराजस्य काव्यकलायां सहृदयहृदयाह्लादकतां भाववैचित्र्यचमत्कार-चारुतां सुधावधीरिण्या मधुरताया निष्यन्दनशीलताञ्च समुल्लसन्तीमवाप्य कस्य न चेतोवतश्चेतसि विचारोऽयं समुन्मीलति—

शिखरिणि क्व नु नाम कियच्चिरं
किमभिधानमसावकरोत् तपः।
रसिक-मानस-रञ्जनकौशलां
रचयितुं कवितां प्रबभूव यः॥

पण्डितराज आसीत् सकलशास्त्रावगाहिधिषणो मनीषी। तदीये प्रकाण्डपाण्डित्ये वैदुष्यमदमर्दनपाटवं व्यराजत। तस्यैतद् दिव्यं वैशिष्ट्यं तत्प्रणीतचित्र-मीमांसाखण्डन-मनोरमाकुचमर्दन-रसगङ्गाधराख्यानां ग्रन्थानामवलोकनेन सम्यग् विदितं सञ्जायते।

चित्रमीमांसाखण्डने अप्पयदीक्षितमतमुपमालक्षणं प्रत्याख्यातुं वक्ति सः—

"यदपि······लक्षणद्वयं तैरेव निर्मितं, तदसत्। वर्णनस्य विलक्षणशब्दात्मकस्य, विलक्षणज्ञानात्मकस्य वा शब्दवाच्यताविरहेणोपमाया वाच्यालङ्कारता न स्यात्। तस्य सर्वथैवाव्यङ्ग्यत्वादव्यङ्ग्यविशेषणवैयर्थ्याच्च। अथ यदि वर्णनविषयीभूतं तादृशसादृश्यमुपमेत्युच्यते तदा यथा गौस्तथा गवय इत्यत्रोपमालङ्कारापत्तेः······।"

पण्डितराजो वस्तुतस्तु आसीच्छ्लाघनीय आलोचकोऽद्वितीयः। तस्य

प्राक्तनेषु शास्त्रकारेषु महती श्रद्धासीत्। सः मम्मटस्यानेकसिद्धान्तान् प्रत्याख्यातवान् परं न क्वापि सः प्रत्याख्यानार्थमशिष्टां भाषामवलम्बमानोऽधिगम्यते। सः स्थाने स्थाने तं 'सहृदय-शिरोमणि'रित्येतेन विशेषणेन सम्बोधयन् समवाप्यते। परं स्वकालवर्तिभिः कतिभिः प्रधीभिः सार्धं तस्यासीत् स्पर्धा। विशेषतो भट्टोजिदीक्षिताप्पयदीक्षिताभ्यां सह। तस्मादसौ तत्सिद्धान्तनिरसने क्वचित् परुषतामाददानः प्रतिलक्ष्यते। अस्तु तावत्।

पण्डितराजो महांस्तार्किकोऽप्यासीत्। तस्य तर्कशैल्या लोकोत्तरत्वं तार्किकमनःप्रसादनप्रवीणत्वं तल्लिखितेषु सिद्धान्तग्रन्थेषु स्फुटतया विशदतया च समवलोक्यते।

पण्डितराजस्य रसगंगाधरोऽपूर्वोऽद्भुतो मूर्धन्यश्च ग्रन्थोऽस्ति ह्यलङ्कारग्रन्थेषु। अध्ययनीयोऽयमस्ति ग्रन्थः। 'अलङ्काराणामिह परमगाम्भीर्येण विवेचनं तलस्पर्शिन्यां मर्म्मभेदिन्यां भाषायां विहितं दृश्यते। तेषां स्वरूपस्य प्रतिष्ठापने यः प्रयास आचरितो विद्वद्धौरेयेण लेखकतल्लजेन वस्तुतः सोऽस्ति अभिनन्दनीयः। न केवलमेतावत्येव विशिष्टता विद्यतेऽस्य ग्रन्थस्य। एषा विशिष्टता तु न वर्तते तादृशी गरीयसी यादृशी रसनिरूपणविषयके स्थले दृष्टा भवति। तत्र तु पण्डितराजस्य प्रतिभायाश्चरम उत्कर्ष एव वीक्षितो जायते। नानार्थकशब्दस्थले पदार्थोपस्थित्यर्थं या प्रक्रियाङ्गीकृतास्ति किञ्च व्यञ्जनामधिकृत्य यो हि सारो निस्सारितः सोऽपि विद्वल्लोकं भृशं प्रीणाति। सर्वेऽपि विद्वांस एकमतेन ग्रन्थेऽस्मिन् प्रदर्शितं काव्यलक्षणं, शक्त्युपपादनं, गुण-निरूपणं, रसस्याङ्गानामुपाङ्गानाञ्च प्रतिपादनं, भावानाञ्च विशदतयावदाततया च कृतं वर्णनं प्रशंसन्ति पुनः पुनः। को नाम रस इत्यत्र स आह—

"समुचितललितसंनिवेशचारुणा काव्येन समर्पितैः सहृदयहृदयं प्रविष्टैस्तदीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना विगलितदुष्यन्तरमणीत्वादिभिरलौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्यैः शकुन्तलादिभिरालम्बनकारणैश्चन्द्रिकादिभिरुद्दीपनकारणैरश्रुपातादिभिः कार्यैश्चिन्तादिभिः सहकारिभिश्च संभूय प्रादुर्भावितेनालौकिकेन व्यापारेण तत्कालनिर्वर्तितानन्दांशावरणाज्ञानेनात एव प्रमृष्टपरिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः।" अत्र सः मम्मटाभिनवगुप्त-भट्टनायकप्रभृतीनामनेकेषां प्राचामाचार्याणां बहूनाञ्च नव्यानां

मतमुपस्थापयन् "रसो वै सः" इत्येतच्छ्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रस इति साधयति।

केचन कविकौशल-कल्पितकमनीयतास्पदं शब्दमेव काव्यं मन्यन्तेऽपरे कविकौशल-कल्पितकमनीयतास्पदं शब्दार्थयुगलमेव काव्यमिति वदन्ति। काव्यस्य एतद्द्वयं सामान्यलक्षणं मतम्। पण्डितराजो जगन्नाथस्तेषु काव्यलक्षणकारिष्वन्यतमो यः शब्दमेव काव्यत्वेन स्वीकरोति। पण्डितराजस्य काव्यलक्षणमिदं— "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" स्वलक्षणस्य व्याख्यायां स इमानि वाक्यानि निदधानोऽवाप्यते :—"इत्थं च चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम्, यत् प्रतिपादितार्थविषयकभावनात्वं, चमत्कारजनकतावच्छेदकं तत्त्वम्। स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारवत्त्वमेव वा काव्यत्वमिति फलितम्।" पण्डितराजः शब्दार्थयुगलं न काव्यत्वेनाङ्गीकुरुते। स आह—"काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञातः, इत्यादिविश्वजनीनव्यवहारतः प्रत्युत शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च··· तदेवं शब्दविशेषस्यैव काव्यपदार्थत्वे सिद्धे तस्यैव लक्षणं वक्तुं युक्तम्।"

पण्डितराजः काव्यस्य कारणमेकमात्रं हि उत्पाद्यां प्रतिभां मनुते। कारणान्तराणि तु परम्परयैव सः काव्यस्य कारणत्वेन स्वीकुरुते। स ब्रूते—"तस्य च कारणं कविगता केवला प्रतिभा।"

रसगङ्गाधरकार उत्तमोत्तममध्यमाधमभेदात् काव्यं चतुर्षु भागेषु विभनक्ति। "केचिदिमानपि चतुरो भेदानगणयन्त उत्तममध्यमाधमभावेन त्रिविधमेव काव्यमाचख्युः" इत्यभिधाय त्रिभेदमानिन आक्षिपति।

पडितराजस्त्रीन् एव गुणान् मन्यते। गुणानां रसधर्मत्वेऽपि अयं विद्वान् महतीं समालोचनां "प्रत्यक्षमेवेति चेत् न······"इत्यादिशब्देषु सन्निवेशयन् वीक्षितो भवति। स "आत्मनो निर्गुणत्वात् रसे गुणानां स्थितिर्न भवितुं शक्नोति" इति वदति। इदमपि स ब्रवीति 'यद् रसस्योपाधयः सन्ति रतिशोकक्रोधादयः। तेषामिच्छा(ज्ञान)रूपत्वात्, ते गुणा इत्युच्यन्ते। गुणो न गुणे स्थातुं प्रभवति; एतद्धेतो रत्यादावपि गुणस्थितिर्न सम्भवा। तस्मात् शब्दादौ गुणा वसन्ति।'

अभिधादिशक्तिनिरूपणकारिषु पण्डितराजजगन्नाथोऽप्यस्ति। तिसृणामपि-अभिधा-लक्षणा-व्यञ्जनानां-शक्तीनां प्रतिपादने व्याख्याने च सः गम्भीरं पाण्डित्यं

सूक्ष्मदर्शित्वञ्च प्रकटीकुर्वन्नवाप्यते । "शक्त्याख्योऽर्थस्य शब्दगतः, शब्दस्यार्थगतो वा सम्बन्धविशेषोऽभिधा" इत्यभिधाया लक्षणमुपपादयन् सः 'केवलसमुदायशक्तिः, केवलावयवशक्तिः समुदायावयवशक्तिसंकरश्चे'ति भेदत्रयेण तस्यास्त्रिविधत्वमामनति । 'शक्त्या प्रतिपादकत्वमभिधा' इत्येतदप्पयदीक्षितोक्तं तल्लक्षणमसौ 'इह शब्दाज्जायमानायाम्'······इत्यादिशब्दैर्निरस्यन् 'न चाभिधातः शक्तिरतिरिक्ते'त्याद्युक्त्वोपसंहरति स्वकीयं तत्प्रत्याख्यानात्मकमवतरणम् । मम्मटादिरिव सोऽपि चतुष्टयी शब्दानां प्रवृत्तिरिति मन्यते । "शक्यसम्बन्धो लक्षणे"-त्येतल्लक्षणा-लक्षणं प्रकाश्य स तस्याः निरूढा प्रयोजनवती चेत्येतौ द्वौ भेदावभिधाय प्रयोजनवत्याः षड्विधत्वं प्रतिपादयति । तत्र च स प्राचामाशयमपि मतभेदप्रदर्शनपुरस्सरमभिव्यनक्ति । एतावदेव न 'नव्यास्तु' इत्यतस्तेषामाकुलीभावः स्यादि'त्येतत्पर्यन्तं नव्यानामपि विचारान् सम्यक् समालोचयति । यथा काव्यप्रकाशे मम्मटेन व्यञ्जनायाः प्रतिष्ठापनमनेकानेकाभेद्याच्छेद्ययुक्तिपूर्वकं विहितं तथा रसगङ्गाधरे तन्न दृश्यते परं संलक्ष्यक्रमध्वनिनिरूपणावसरे पण्डितराजस्तदुपपादनं वैदग्ध्येन विदधानः पर्यवलोक्यते । एकस्मिन् स्थले स ब्रूते—"····'तस्मान्नानार्थस्याप्राकरणिकेऽर्थे व्यञ्जने'ति प्राचां सिद्धान्तः शिथिल एव । प्राकरणिकाप्राकरणिकयोरर्थयोरुपमायां तु सा कदाचित्स्यादपीत्यत्रास्माकं प्रतिभाति··· ।"

भावः क इत्यत्र स्वमतस्य प्रदर्शनात् प्राक् पण्डितराजस्तत्तद्भावलक्षणेषु दोषं दर्शयति । तदीयानि भावप्रकरणगतानि वाक्यानि द्वित्राण्यत्र निधीयन्ते—(१) "अथ किं भावत्वम् ? विभावानुभावभिन्नत्वे सति रसव्यञ्जकत्वमिति चेत्, रसकाव्यवाक्येऽतिव्याप्त्यापत्तेः ।" (२) "नापि रसाभिव्यञ्जकचर्वणाविषयचित्तवृत्तित्वं तत्त्वम् । भावादिचर्वणायाम्······अतिप्रसक्तेः ।" इत्थं हि पण्डितराजस्तत्तल्लक्षणमालोचयन् स्वाभिमतं भावलक्षणं लिखत्येवम्—"विभावादिव्यज्यमानहर्षाद्यन्यतमत्वं तत्त्वम् ।" लक्षणञ्च नैजं "व्यभिचार्यञ्जितो भावः" इत्येतत् काव्यप्रकाशकारोक्तञ्च भावलक्षणं प्रतिष्ठाप्य परिपुष्णाति । निःसंशयं, भावानां यद् विशदं यथार्थं निरूपणं पण्डितराजेन कृतं तदतितरां रमणीयं वर्तते । एवमेवानेकार्थकशब्दस्थले पदार्थोपस्थितिः केन प्रकारेण जायते—इत्येतद्विषयकं यदुपपादनं पण्डितराजेनानुष्ठितं तद् विद्वद्वराणां निखिलामपि जगतीं भृशं प्रीणाति । पण्डितराजो यमपि विषयं विविनक्ति तं प्रकाण्डपाण्डित्य-

चल्यां भाषायां सन्निदधाति। तस्य विवेचनशैली सर्वत्र तर्कोद्ग्रथिता समवाप्यते। सः अन्येषां मतानां प्रदर्शने समुपस्थापने विवेचने च परामेव रुचिं निदधाति। वस्तुनो मर्म्म, तदीयाः सर्वा विशिष्टतास्तदीयानि सम्पूर्णान्यप्यङ्गानि तदीयमाभ्यन्तरं रूपञ्च यावन्न स्फुटतां यान्ति तावत् स तद्वस्तु जहात्येव न। व्यञ्जनामुद्दिश्य सर्वैरपि साहित्य-शास्त्रपारदृश्वभिर्विमर्शनं विहितं परं पण्डितराजस्य तद्विषयकविमर्शनं किमप्यपूर्वमेव विद्यते। वस्तुतस्तस्य विचाराविर्भावनप्रकारोऽनुपमोऽस्ति, नैजोऽस्ति, विचित्रोऽस्ति। तस्य ग्रन्थे रसगङ्गाधरे विदुषां बुद्धिः सर्वत्र यथेष्टं भोज्यमधिगच्छति। उपमालङ्कारादुत्तरालङ्कारपर्यन्तं येऽप्यलङ्कारास्तेन स्वकीये ग्रन्थे समुपस्थापितास्तेषां सर्वेषामप्यलङ्काराणां स्वरूपं यादृश्या तलस्पर्शिन्या शब्दावल्या, यादृश्या, मर्म्मप्रकाशिन्या भाषया, यादृश्या प्रौढया रीत्या, यादृश्या ओजस्विन्या सज्जया च तेन प्रतिष्ठापितं न तादृश्या शब्दावल्या भाषया रीत्या सज्जया च कोऽपि प्रतिष्ठापयन् समुपलभ्यते। अत्र तस्यालङ्कार-निरूपणं कीदृशं भवतीत्येतद् दिङ्मात्रं प्रदर्श्यते पर्यायोक्तालङ्कारवर्णनस्थले सः आचार्यमम्मटभट्टस्य भावं कीदृश्यां दुरवगाहायां भाषायां सन्निदधाति—इति विलोक्यताम्—'अस्यां च गम्यस्य येनाकारेण गम्यता तदतिरिक्ताकारेण वाच्यता। तेन पर्यायेण भङ्ग्यन्तरेणोक्तमभिहितं व्यङ्ग्यं यत्रेति प्राचीनैर्निर्मितं लक्षणं व्यङ्ग्यत्ववाच्यत्वयोर्विरोधादसंगतमिति नाशङ्कनीयम्। एकस्यैव प्रकारभेदेन वाच्यत्वव्यङ्ग्यत्वयोरविरोधात्...।' विद्वन्मूर्धन्यः पदे पदे स्वपाठकानां हितार्थं हि अन्येषामलङ्काराचार्याणां मतानि निदधानो दृश्यते। अत्रैव पर्यायोक्ते क्वापि सः "गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम्......" इत्यादिशब्दैः अलङ्कारसर्वस्वकारस्य मतं, क्वापि "पर्यायेण वाच्यादतिरिक्तप्रकारेण व्यङ्ग्येनोपलक्षितम्......"इत्यादिशब्दैः अभिनवगुप्तपादाचार्याणां मतं, क्वापि च कुवलयानन्दकारस्य च मतं निदधानः केन न प्राप्यते? सः दयालुर्मनीषी न केवलं तत्तन्मतान्युपन्यस्यति, अपि तु तेषामाशयमपि समुपस्थाप्य पाठकवृन्दमुपकरोतितराम्। अलङ्कारस्वरूप-निरूपण-परमतसमुपस्थापनादिनैव स न तुष्यति अपि तु सः 'अमुकालङ्कारस्यामुकालङ्कारात् का भिन्नते'त्याद्यपि साधु प्रस्तवीति। एवंविधा तस्य विशिष्टता सर्वत्रापि तद्ग्रन्थे पाठकैरवाप्यते।

पण्डितराजजगन्नाथसंकाशानेव पण्डितसत्तमानधिकृत्य केनापीदमवितथमेवोदीरितम्—

अर्थाहरणकौशल्यं किं स्तुमः शास्त्रवादिनाम् ।
अव्ययेभ्योऽपि ये चार्थान्निष्कर्षन्ति सहस्रशः ॥

अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम् ।
लोकोत्तरा च कृतिराकृतिरङ्गहृद्या
विद्यावतां सकलमेव गिरां दवीयः ॥

( ४६ )

## शिवराजविजयः

सप्तपञ्चाशदधिकाष्टादशशततमेशवीयाब्दे घटितस्य राजविद्रोहस्य विफलता यदा मातृभूमेः प्रातःस्मरणीयानां भक्तानां दलनं विधाय भारतीयाया जनताया मानसे वेगवतीं गभीरां निराशां सञ्चार्य विजृम्भमाणा पर्यवालोक्यत, जनतायाः स्वान्ताद् यदा स्वातन्त्र्यावाप्तिविषयको विश्वासोऽपाह्रियत, यदा समीरोऽपि श्वासादानकर्मणि वेपमानोऽन्वभूयत तदा तदानीन्तनस्य साहित्यिकसंसारस्य अलौकिकालोकलोलं नक्षत्रं महाकविः अम्बिकादत्तव्यासो भारतीयानां हृदयान्निराशामविश्वासं निर्विण्णतामुत्साहहीनतामुदासीनतां विक्लवताञ्च दूरीकर्तुं तत्र च प्रस्फुरन्तीमाशां सबलं विश्वासमदम्यां जीवनशक्तिं बलीयांसमुत्साहमद्भुतं साहसं श्लाघनीयं स्वसाध्यसाधकक्रियाकौशलमनभिभवनीयञ्च पौरुषं सञ्चारयितुं सिंहोरुसत्त्वस्य महाराजस्य पुण्यश्लोकस्य शिवराजस्य स्पृहणीयेन चरित्रेण पूयमानं शिवराजविजयं नामानुपमं गद्यकाव्यं ससर्ज ।

एषा हि शिवराजविजयाख्या रचना वस्तुतः पुष्कलगुणविशिष्टत्वात् सामयिकाभिलाषपूर्तिकारित्वाच्च विंशस्य शतकस्य रचनासु उच्चतमं स्थानमध्यास्ते । साम्प्रतिकस्य समयस्य महान् विद्वान् डॉक्टर भगवान् दास एतां महनीयां कृतिमभिनन्दन् प्राह—"......संस्कृतसाहित्यस्य पण्डितमण्डले प्रायेण त्रयाणां गद्यकाव्यानां चर्चा चिरादतितरां प्रवर्तमानावाप्यते । तानि गद्यकाव्यानि सन्ति—सुबन्धोर्वासवदत्ता, बाणस्य कादम्बरी, दण्डिनश्च दशकुमारचरितम् । दण्डिनो गद्यकाव्यं दशकुमारचरितं तु निश्चप्रचतया स्वेतर-गद्यकाव्यद्वयात् वरतरमिति वक्तुं सुशकम् । यद्यप्यलौकिकतामसम्भाव्यतामिव च सेधन्त्यो घटनाः असकृत् घटितास्तत्र सन्ति परं तत्र भाषा न केवलमोजस्विन्यर्थवती च शोभते राजनीति-लोकचातुरी-ललितकलादिविषयकं ज्ञानमपि तत्र समुल्लसति परं वासवदत्तायाः कादम्बर्याश्च शब्दारण्यान्यां तु वराकोऽर्थपान्थः सर्वथा भ्रान्तो भ्रष्टश्च भवन् विलुप्ततामिव प्रयाति, तस्योपलब्धिरेव न भवति । कवितायाः गुणेषु प्रसादो मुख्यो गुणः; स एतयोर्द्वयोरपि समवाप्तो न जायते । परं शिवराजविजये न स्थितिरीदृशी । तत्र भाषा उत्तमोत्तमापि ओजस्विन्यपि अर्थपूर्णापि सुबोधापि

अस्ति। सा यथास्थानं यथावसरं च मृदुलोत्कटा च दृश्यते। नवापि रसास्तत्र नितरामुचिततया दक्षतया च सन्निवेशिताः सन्ति। वीररसः, यस्यार्वाचीने संस्कृतसाहित्ये प्रायेणाभाव एवास्ति, ग्रन्थेऽस्मिन् अस्ति प्रधानः। शृङ्गारोऽप्यस्ति। अस्ति च सः सर्वथा सात्त्विकः सुकोमलः प्रसन्नश्च। क्वापि न तत्राश्लीलता समागतास्ति। युद्धसन्दर्भे रौद्र-भयानक-वीभत्सानामथ च वीरे अद्भुतस्य निर्वहणं पर्याप्तमात्रायां समीचीनमेव संवृत्तमस्ति। राजनीतेश्चारचातुर्य्यस्य संग्रामशौण्डतायाश्च निरूपणमत्यन्तं मनोज्ञं वर्तते। उच्चतमा च विशिष्टतेयमेतदीया यद् गृहीतो हि विषय ऐतिहासिको विद्यते तत्रास्ति यथार्थता न च कपोलकल्पितता तत्र वर्तते। देशभक्त्या जन्मभूमिभक्त्या चैषा कृतिः परिपूर्यमाणास्ति। तत्र राजानं प्रति प्रजाया भक्तिः, प्रजाश्च प्रति राज्ञो भक्तिरथ च द्वयोरेव धर्मम्प्रति भक्तिः किञ्च राष्ट्रियभावना उच्चैः परिस्पन्दते। एतादृशानां भावानां वस्तुतोऽर्वाचीनेषु संस्कृतग्रन्थेषु सर्वथा अभाव एव प्राप्यते।

नाहमवबोद्धुं शक्नोमि, कस्मात्कारणात्, विद्वन्मण्डलमश्लीलतापूर्णेषु हठादाकृष्टपदसुगुम्फितेषु माघकिरातादिषु तावन्तं महिमानमारोपयति; अत्र च ते रत्नभूते ग्रन्थे शिवराजविजये—ईर्ष्यन्ति न चेत्, तदा तेषां पराङ्मुखता तु अस्ति। ग्रन्थस्यास्य यावान् प्रचारः स्यात् तावदेव वरम्।"

महामहोपाध्यायो गोपीनाथमहाकविराजश्चाद्यतनो विद्वद्धौरेय इदमैतिहासिकं गद्यकाव्यं साम्प्रतिकस्य युगस्य श्रेष्ठां रचनां मन्वानो ब्रूते—यद् यद्यपि कृतिरेषा नव्या परमुत्कृष्टतमस्थानाधिष्ठापनार्हा।

इदं सर्वे विपश्चिद्वराः सम्यग् जानन्ति यद् गद्यकाव्यस्य प्रणयनं दुष्करं भवति। पद्ये सौष्ठवं तु सुलभतया समुत्पद्यते परं तद् गद्ये सुलभतया न कदापि सम्भवम्। सर्वाङ्गीणसुन्दरतायाः समुन्मीलनं तु तत्र ततोऽपि कठिनं भवति। अत एव 'गद्यं कवीनां निकषं वदन्ति' इत्येषा सूक्तिः सर्वत्र सुविदितास्ति। गद्यकाव्यस्य दुष्करतां लक्ष्यीकृत्य—"पद्ये छन्दःपारवश्यात् स्वच्छन्दपदप्रयोगो न भवतीत्यनिच्छतापि कविताप्रसङ्गप्राप्तं स्वाभाविकं स्वल्पमपि वचनीयं क्वचिद् विस्तार्यते, क्वचिद् बह्वपि नियताक्षरैः संक्षिप्य चोद्दिष्टं विधीयते, क्वचिच्च द्वित्रस्वाभाविकपदप्रयोगसमापनीयान्यपि पारस्परिकालापसंसक्तप्राप्तवाक्यानि जटिलीक्रियन्ते। गद्ये तु यदि किमपि तादृशमस्वाभाविकं स्यात्, तत्कवेरेव निर्वक्ति महदवद्यम्—इत्यादिकारणैः पद्यापेक्षया गद्यमेव श्लाघामान्यं

भवति" इत्येतद् अम्बिकादत्तव्यासः स्वयमपि वक्ति परं यदा वयं नैजदृष्टिं तस्य शिवराजविजयस्थितगद्योपरि आपाततयैव त्तिपामस्तदैव तत्त्वणं ज्ञातं जायते यत् श्रीव्यासविदुषो गद्यं ताः सर्वा विशिष्टताः निदधाति याः श्रेष्ठगद्ये भवन्ति ।

"नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ॥"

इति यद् बाणेन गद्यस्य सौन्दर्य्यमुदीरितं तत् स्फुटतयैव श्रीव्यासस्य कृतौ-शिवराजविजये विलोकितं भवति । तत्र सर्वत्र मनोभिरामाणां पदानां सञ्चयनं कृतं वर्तते; नवनवार्थानामुन्मेषः संलभ्यते; न क्वापि अस्वाभाविकताया लेशोऽपि दृष्टो भवति; श्लेषस्य परिग्रहो यत्रापि कृतो न सः अस्ति शिरोवेदनाकृत् । पाठकः श्रोता च अनायासेनैव सर्वत्र रसं पिबन् अग्रे उपसरन् वीक्षितो जायते । संस्कृतभाषायां वीरतापूर्णभावानामभिव्यक्त्यर्थं कियती बलवती सफला च शक्तिर्विराजते किञ्च नव-नवविषयस्यात्मसात्कारिणी कीदृशी कियती च महती प्रभविष्णुता प्रफुल्लतीति च श्रीव्यासविपश्चिद्वरस्य शिवराजविजयाध्ययनेन सम्यग् ज्ञातं भवति । इहोद्धरणानि निधाय एतासां सर्वासां विशिष्टतानां किञ्च एताभ्यो व्यतिरिक्तानामन्यासां विलक्षणतानां प्रदर्शनस्य समासेनोद्योगो विहितो भवेद् येनोपरि निवेदितं निवेदनं प्रत्यक्षं स्यात् किञ्च समालोचकैर्विद्वद्भिर्ग्रन्थ-मिममधिकृत्य या श्लाघा कृतास्ति तस्या अपि सत्यता प्रमाणिता भवेत् ।

शिवराजविजयस्य रचनायाः कालः स आसीद् यदा भारतीयजनताया मानसे देशभक्तिभावना पूर्णतया प्रसुप्तासीत्, यदा भारतीयाः शोचनीयां दीनतां कापुरुषताञ्च अवलम्बमानाः समवाप्यन्त; यदा तेषु नोत्साहो, न जीवन-शक्तिः, न कर्त्तव्यपरायणता, न स्वधर्मपालननिष्ठा च व्यलोकिषत; यदा ते निद्रया, व्यसनेन बहुविधैश्च देशापकारानुरागैः कलहैरेव नैजं जीवनसमयं नयन्त एव समुपालभ्यन्त; यदा तेषां शोणितेऽल्पापि उष्णता नान्वभूयत; यदा ते स्वकीयं गौरवं सर्वथैव विस्मरन्तो दासतामेव सर्वस्वं मन्यमानाः सुखेन कालं क्षिपन्तोऽदृश्यन्त; यदा ते विनष्टशौर्यभव्या भवन्तः परचाटुकारितायामेव संलग्ना अवाप्यन्त; यदा ते स्वसंस्कृतौ स्वसभ्यतायाञ्च नितान्तमनभिज्ञा एव प्रत्यैयन्त; यदा ते निष्प्राणाः सन्तोऽपि शृङ्गार एव निलीना व्यालोक्यन्त; यदा ते परकृतं न्यक्कारमपि स्वकीयं सम्मानमिवावगच्छन्तः सर्वत्र समासाद्यन्त; यदा च ते सर्वमप्यौचित्यं विस्मरन्तो नृत्ये सङ्गीते हासे उपहासे च निमज्जन्तः पर्यवैक्ष्यन्त । एतादृशे चिन्तनीये पतनकाले शिवराजविजयो भारतीयां जनतां देशभक्तिमन्व-

शिपत्; तस्यास्तादृशेऽनेहसि किं प्रमुखं कर्त्तव्यमित्युपादिशत्; तस्या मानसे उत्साहस्योत्कटं स्रोतः समचारयत्; तस्यामात्मगौरवभावनामजागरयत्; तस्याः स्वान्ते वीरताया अनभिभवनीयां नितान्तवेगवतीं सबलां भावनामपूरयत्; तत्र च स्वातन्त्र्यस्य शक्तिशालिनः पावनान् भासुरांश्च भावान् कृत्स्नतया अवपत्। "क्वाधुना मन्दिरे मन्दिरे जयध्वनिः? क्व सम्प्रति तीर्थे तीर्थे घण्टानादः? क्वाद्यापि मठे मठे वेदघोषः? अद्य हि वेदा विच्छिद्य वीथीषु विक्षिप्यन्ते, धर्मशास्त्राण्युद्धूय धूमध्वजेषु ध्मायन्ते, पुराणानि पिष्ट्वा पानीयेषु पात्यन्ते, भाष्याणि भ्रंशयित्वा भ्राष्ट्रेषु भर्ज्यन्ते; क्वचिन्मन्दिराणि भिद्यन्ते, क्वचित् तुलसीवनानि छिद्यन्ते, क्वचिद् दारा अपह्रियन्ते, क्वचिद् धनानि लुण्ठ्यन्ते, क्वचिदार्त्तनादाः, क्वचिद् रुधिरधाराः, क्वचिदग्निदाहः, क्वचिद् गृहनिपातः" इत्याद्युच्चैरुद्घोष्य सकलानामपि भारतीयानां मनांसि प्रसभमान्दोलयन् तेषां नयनानि उन्मीलयन्; तेषां नाड्याः शोणितमुष्णत्वं प्रापयन्, अन्यायं प्रति तेषां रोमणि रोमणि रोषं जनयन्; अत्याचारपराणां म्लेच्छानां विध्वंसनाय तेषां स्नायुषु प्रचण्डां भीषणाञ्च जीवनशक्तिं समुत्पादयन् हि सः समुपतिष्ठते।

यद् भारतं सम्प्रति धीरैः प्रतापशालिभिस्तेजस्विभिर्विक्रमवद्भिर्वीरताश्रीसुशोभितैर्विहीनमस्ति यत्र नाधुना शान्तिर्न च लक्ष्मीः न च सौख्यं न च धर्मो न च विद्यैव वीक्ष्यते; यत्र च राजानः परस्परं कलहायन्ते; स्नेहबन्धनं शिथिलीकृत्य च वैरे धियं नियोज्य स्वकीयान् एव विनाशयितुमुपक्रमन्ते, यत्रत्या हि भटाः स्वशौर्यवैभवं सुन्दरीणां सकटाक्षेक्षणचरण-सरसिजेषु सादरं समर्पयन्तो वीक्ष्यन्ते; यस्य देशस्य अमात्य-समुदायः स्वार्थचिन्तायामेव सततं निलीनोऽवाप्यते; यत्र नृपाः स्वप्रशंसाश्रवण एव प्रगाढां रुचिं निदधति, यत्र च विद्वांसोऽपि मूर्खमपि भूपं 'त्वं विद्वान् असि' इति, गुणलवरहितमपि 'त्वं गुणिनां शिरोमणिरसी'ति, बलरहितमपि' 'त्वं बलवतां भूषणमसी'ति, कुरूपमपि 'त्वं कामदेवस्यावतारोऽसी'ति, उपेक्षितप्रजानिखिलहितमपि 'त्वं सदैव प्रजानां हिते निरतोऽसी'ति च कथयित्वा कथयित्वा सर्वदा मिथ्या प्रशंसां विदधानाः श्रुता भवन्ति, तस्य भारतस्य चिन्तास्पदं चित्रं निधाय 'शिवराजविजयः' प्रियस्य स्वस्य देशस्य निवासिनः सर्वानपि मानवान् सप्रश्रयं सानुरोधं च सन्दिशति यत् ते पतनगर्तनिपतितं स्वकीयं देशं समुत्थापयितुं मनसा वचसा कर्मणा च प्रयतेरन्।

स एव देशः स्वस्य ईश्वरस्य, स्वस्य धर्मस्य, स्वस्य साहित्यस्य, स्वस्याः भाषायाः, स्वकीयायाः सम्पदः, स्वकीयानां पुत्रकलत्राणां, स्वकीयानां देवमन्दिराणां धर्मसंस्थानां पुरातनानां दुर्गप्रासादादीनां, स्वकीयानां सर्वेषामपि कलाकौशलानां, नैजानां तीर्थानां पुस्तकालयानां शिक्षागाराणामुद्योगागाराणाञ्च रक्षां कर्तुं शक्नोति यस्य देशस्य देवपूजकाः, महात्मानो धर्मात्मानः पुरोहिताः पण्डिताः श्रोत्रिया उपदेशकाः सर्व एव युवानो युवतयश्च सर्वाः, समग्रा एव स्त्रियः पुरुषाश्च बाला बालिकाश्च कर्मण्याः कठोरकर्मठाः भवन्ति, शक्तौ शौर्ये पौरुषे च विश्वसन्ति; विवेकेन सर्वमपि साधु विमृश्य धैर्यमवलम्ब्य व्यसनानि विहाय प्राणानपि अञ्जलौ निधाय स्वकीयं कर्त्तव्यं सोत्साहं पालयन्ति। परमात्मा तेषां मानवानां सहायको न कदापि भवति ये स्वकर्त्तव्येभ्यो विमुखा भूत्वा स्वस्य देशस्य स्वदेवतादीनां रक्षार्थं भगवन्तमाह्वयन्ति प्रार्थयन्ते च—"हे भगवन् अस्मान् अस्मदीयं धर्मादिकं सकलं च पाहि" इति। शिवराजविजयो न दैववादे श्रद्धां निदधाति; सः कर्मणि श्रद्धत्ते; सः शौर्यमाराधयति; सः पौरुषस्य श्रीचरणेषु स्वं मौलिं प्रणतं कुरुते। तदीयमिदं मतं यद् भगवतास्मत्कृते मनो-बुद्धिहस्तपादादिकानि सर्वाणि साधनानि प्रदत्तानि सन्त्यतोऽस्मदीयं कर्त्तव्यमस्ति यद् वयं तेषां सर्वेषां साधनानां सम्यग् विविच्य, विचिन्त्य, विमृश्य च सदुपयोगं विदधीमहि। ईश्वरस्तेषामेव कार्येषु सहायको भवति ये सत्यया कठोरतया वीरतया च स्वकीयं कर्त्तव्यमभिव्यञ्जन्ति। "वीर! गृहीतमखिलं वित्तम् पराजिता आर्य्यसेनाः; बन्दीकृता वयम्, सञ्चितममलं यशः, इतोऽपि न शाम्यति ते क्रोधः······किन्तु त्यजेमामकिञ्चित्करीं जडां महादेवप्रतिमाम्।" इत्यादिकानां पङ्क्तीनां समुपस्थापनस्य प्रयोजनमिदमेव शिवराजविजयस्य प्रतीयते।

भारतवर्षीयेषु भारतवर्षीयतां शिवराजविजयो द्रष्टुं कामयते अतः स आह पुनःपुनः "भारतवर्षीया यूयम्", इति। नास्माभिः स्वकीयमाभिजात्यं जातु विस्मरणीयमतः स महोच्चकुलजाततां स्मारयति भूयोभूयः। धर्मः प्राणेभ्योऽपि गरीयान्। तद्रक्षणं प्राणैरपि विधेयमित्येतद्बोधयितुं स ब्रूते—"प्राणा यान्तु न च धर्मः" इत्यार्याणां दृढः सिद्धान्तः। महान्तो हि धर्मस्य कृते लुण्ठ्यन्ते, पात्यन्ते, हन्यन्ते, न च धर्मं त्यजन्ति, किन्तु धर्मस्य रक्षायै सर्वसुखान्यपि त्यक्त्वा, निशीथेष्वपि, वर्षास्वपि······चन्द्रहासचमत्कारेष्वपि च निर्भया विचरन्ति।

"कार्यं वा साधयेयम्, देहं वा पातयेयम्" इत्येतद्धि जीवनस्य लक्ष्यं शिवराजविजयस्याभिमतम्। भारतवर्षस्य निवासिना स्वकीयस्य राष्ट्रस्य स्वतन्त्रताया रक्षणाय, स्वदेशस्य संस्कृतेः सभ्यतायाः भाषायाश्च परित्राणाय, स्वराष्ट्रस्य गरिम्णः परिवर्द्धनाय, स्वकीयस्य धर्मस्य च गोपनाय एतादृश्येव द्रढीयसी प्रतिज्ञा कर्त्तव्येति शिवराजविजयस्य हार्दिकोऽभिलाषो बलीयान्। कामं महान् प्रचण्डो झञ्झावातः प्रवर्तमानो भवेत्, कामं दारुणाभिः श्यामश्यामतराभिर्वनघटाभिर्व्योम आक्रम्यमाणं स्यात्, कामं मार्गो नितान्तभयङ्करो विषमो दुर्गमो वनसङ्कीर्णः पर्वतश्रेणीसमाकुलो नानाविघ्नबाधाभिर्ग्रस्यमानश्च भवेत् परं न स्वकीयाल्लक्ष्यमार्गान्मानवेन स्खस्तेन भाव्यमित्येतद् उपदेष्टुमेव शिवराजविजयः— "तावदकस्मादुत्थितो महान् झञ्झावातः, एकः सायं समयप्रयुक्तः स्वभाववृत्तोऽन्धकारः, स च द्विगुणितो मेघमालाभिः।......वनाद् वनानि, शिखराच्छिखराणि, ...परश्शतशतघ्नी-प्रचारजन्मनेव-कन्दरि–कन्दर–प्रतिध्वनिभिश्चतुर्गुणितेन महाशब्देन पर्यपूर्यंत साऽरण्यानी। परमधुनाऽपि—"देहं वा पातयेयं कार्यं वा साधयेयम्" इति कृतप्रतिज्ञोऽसौ शिववीर-चरो न निजकार्यान्निवर्तते इत्येतदवतरणमवतारयति मुदा।

शिवराजविजयो हि देशे तादृशान् भृत्यान् दिदृक्षते यादृशा हि भृत्याः शिवराजस्य सविधे बभूवुः। न शिवराजस्य भृत्याः स्वामिनो वञ्चनं जानन्ति स्म; न ते केनापि बृहत्तरेण, उत्कोचलोभेनैव गृह्यमाणा अभूवन्; ते सकला अपि विपदः सोढुं तु सदा सन्नद्धा अवाप्यन्त परं न ते आत्मानं कर्त्तव्यपदादभ्रंशयन्। शिवराजविजयो राजकर्मचारिषु सेवकेषु राज्यम्प्रति देशम्प्रति सत्यमनुरागं, सत्यं कर्त्तव्यपरायणत्वं सञ्चारयितुमेव—"कथं विश्वासघातं स्वामिवञ्चनञ्च शिक्षयसि?......ये उत्कोचलोभेन स्वामिनं वञ्चयित्वा आत्मानमन्धतमसे पातयन्ति, न वयं शिवगणास्तादृशाः......" इत्यादिकानि वाक्यानि सन्निवेशयति। शिवराजविजयस्याकाङ्क्षास्ति यद् देशस्य नेतृषु ते सर्वे गुणाः सन्ति वाञ्छनीया ये महाराजे शिवे अशोभन्त। तद्गुणा विशिष्टा एव देशस्य भारतस्य स्वतन्त्रतां पातुं प्रभवेयुः किञ्च देशस्य गौरवं वर्धयितुं समर्थाः स्युः। अतः सः शिवस्य गुणवर्णनव्याजेन स्वदेशस्य शासनसूत्रधारिषु राजनीतिनिष्णातत्व–विद्यासिन्धुत्व–रणचतुरत्व–दीनदुःखदावदहनत्व–स्वधर्मरक्षणसक्षणत्व–विलक्षणविचक्षणत्वादिकगुणानां सन्निवेशो भवेदित्येतां स्वकामनां प्रकटयति। न सञ्चिच्छति

यद् देशस्य भारतस्य पवित्रायां वसुन्धरायां क्वापि गोपीनाथसदृशा देशद्रोहिणो दृष्टाः स्युः; ये स्वकीयं व्यक्तित्वमुत्थापयितुं स्वं जीवनं सुखेन यापयितुं देशस्य अरातीनां चरणेषु अञ्जलिं बद्ध्वा लालाटिकतामङ्गीकुर्वन्ति; ये मातृभूमिद्वेषिणा-मेव दासेरकतां वहन्ति ।

शिवराजविजयोऽस्माकं पुरतो हि—"तत्र च क्वचित् खट्वासु पर्यङ्केषु चोप-विष्टान्, सगडगडाशब्दं ताम्रकूधूममाकृष्य······मदव्याघूर्णितशोणनयनान्, सपारस्परिककण्ठग्रहं पर्य्यटतः" इत्यादिभिर्वाक्यश्रेणीभिर्यवनसैन्यस्य स्कन्धा-वारीयं चित्रं किञ्च "अद्य गानम्, अद्य लास्यम्, अद्य मद्यम्, अद्य वाराङ्गना, अद्य भ्रूकुंसकः, अद्य वीणावादन" मित्यादिपङ्क्तिभिर्यवनसेनापतीनां वैलासिकस्य जीवनस्य चित्रमालिख्य किञ्च—"म्लेच्छगण-दुराचार-दुःखाक्रान्त-वसुमती-वेद-नामिव समुद्रशायिनि निविवेदयिषुः, वैदिकधर्म-ध्वंस-दर्शन-संजात-निर्वेद इव······" इत्यादिभिः पङ्क्तिभिः सूर्यस्यास्तंगततताया वर्णनच्छलेन तत्कालवर्तिनो भारतस्य हृदयभेदिकां दशामस्मत्पुरो निदधाति ।

शिवराजविजयस्य वर्णनानि सन्ति नितान्तमेव मनोभिरामाणि; तत्र नितरामेव नैसर्गिकता विलसति । तत्र न केवलं वर्णनोपयुक्तानि पदान्येव राज-न्तेऽपि तु तत्र मनोज्ञा सजीवता सरसता धारावाहिकता चातितरामेव परिस्प-न्दमाना वीक्षिता भवति । दृश्यताम्—

सेयं वर्णेन सुवर्णम्, कलरवेण पुंस्कोकिलान्, केशैः रोलम्बकदम्बान्, लला-टेन कलाधरकलाम्, लोचनाभ्यां खञ्जनान् अधरेण बन्धुजीवम्, हासेन ज्योत्स्नां तिरस्कुर्वन्ती वयसा एकादशमिव वर्षं स्पृशन्ती श्यामकौशेयवस्त्रपरिधाना······ अविदितबहुलतानतारतम्यं मन्दमन्दं मुग्धमुग्धं मधुरमधुरं किञ्चिद् गायतीति ।

शिवराजविजयस्य भाषास्ति नितान्तमेव चमत्कारमयी । तां निशम्याधीत्य वा मनो विस्मितं भवति तत् तच्छ्रवणाध्ययनानेहसि भृशं मुग्धं जायते; सर्वमपि अन्यत् तद् विस्मरति; अपूर्वमेव विलक्षणमेवाद्भुतमेव रसं निपीय तन्मन्यते आत्मानं धन्यतमम् । विलोक्यताम्—

"अपरदासेरकेण व्यादिष्ट-मार्गो नव-वारिद-वारि-बिन्दु-वृन्दसम्पर्क-प्रकटित-सिन्धुर-सन्दोह-सन्तर्पण-मधुरगन्धि रजनीकरनिकरविरोचितां भूमिमालोकयन्··· आसन्नकूपाज्जलमुत्तोल्य हस्तपादं प्रक्षाल्य, हनुमन्मूर्तिं दृष्ट्वा कमपि नित्यनियम-मिव निर्वाह्य······वातानां सुखमनुभवन्, कदाचिच्चन्द्रम्, कदाचित् तारकाः,

कदाचिद् गिरिशिखराणि ...... अवलोकयन् ...... परिक्रमापरपादाहति–पिच्छिल-पापाण–पट्टिका–परिष्कृत–वेदिकायां पर्यटन् कञ्चित् समयमतिवाहयाम्बभूव ।"

अस्मिन् शिवराजविजये बहूनामलङ्काराणां प्रयोगः कृतो दृश्यते। क्वचिदुपमा, क्वचिद् रूपकम्, क्वचिद् विरोधाभासः, क्वचित् समासोक्तिः, क्वचिच्च अन्येऽनेकेऽलङ्काराः सचेतसां चेतांसि चोरयन्तः परिस्फुरन्ति ।

"एष भगवान् मणिराकाशमण्डलस्य, चक्रवर्ती खेचरचक्रस्य, कुण्डलमाखण्डलदिशः, दीपको ब्रह्माण्डभाण्डस्य, प्रेयान् पुण्डरीकपटलस्य" इत्यादौ मालारूपकालङ्कारः कियतीं मनोहरच्छटामावध्नन् विलोकितो भवति; "कर–कम्पित–कृपा–कृपण–कृपाणो महादेवमारिराधयिषुस्तपस्विवेषोऽर्जुन इव शान्तवीररसद्वयस्नातः" इत्यत्र पूर्णोपमा स्वकीयं सौन्दर्यं वितन्वन्ती दृष्टा जायते; "परितश्च तस्यैव खर्वामप्यखर्वपराक्रमां श्यामामपि यशःसमूहश्वेतीकृतत्रिभुवनां कुशासनाश्रयामपि सुशासनाश्रयाम्" इत्यादौ विरोधाभासस्य विच्छित्तिः साधु दृष्टिगोचरीभवति; "धारिताकृतिमिव वीरतां विग्रहिणीमिव धीरता" मित्यादावुत्प्रेक्षा परिस्पन्दमाना सती विलोक्यते; "तेषां चैकैकमन्तरा महाफला माकन्दद्रुमाः, मध्ये मध्ये च विहितपार्श्वस्थ-पादपाश्लेषा मन्दमन्दमनिलालोला लता लसन्ती" त्यादौ समासोक्तिश्च स्वविलासेन बुधवृन्दस्य मनो हरन्ती वीक्ष्यते ।

"पाथोधि-पयःपूर-परिवर्ति-परश्शतपोतस्थ-सांयात्रिकसमूह-जेगीयमान-कीर्ति-चन्द्रिका-चुलुकन-चकोरीभूत-कोङ्कण-कल्याण-खानदेशादि–महामण्डल-प्रजागणः" इत्येवंविधानि दीर्घदीर्घतराणि समासाश्लेषितानि वाक्यान्येव न, शिवराजविजयः उपहारीकृत्य कोविदकुलं परिप्रीणात्यपि तु सः "अभाग्य एष जनः, अस्वायत्तं हृदयम्, विगलितं धैर्य्यम्, पराधीनं चित्तम्, अस्थिर आत्मा, दुर्निवारः प्रेमप्रवाहः, दुरन्तोऽभिलापः, अप्रतिरोधा कर्मरेखा, तत् किमिव वच्मि ? इत्यादिकानि सरलसरलतराणि लघुलघुतराणि वैदर्भीरीतिसमुल्लसितानि वाक्यानि चोपायनीकृत्य विद्वद्वर्गं नन्दयति ।

शिवराजविजयो न केवलं साहित्यिकान् ललितललिततरैः नवनवकल्पनाकलितैर्नानाभावविभावितैर्वाक्यैः सम्यक् मोदयतेऽपि तु स "धानुष्क-शाक्तीक-प्रासिक-घाण्टिक-यतर-ततर-मोमुच्यमान–नरीनृत्यमान–पोस्फुट्यमान-तातप्यमान–अलुलुण्ठत्-प्रातवीविशत्-विधित्सु-सिस्नासु-व्ययाजिपत-अतापिपत-चर्कर्त्ति-वर्भर्त्ति–जर्हर्त्तिप्रभृतिप्रचुरतरपदानि च प्रयुज्य वैयाकरणानामपि संसारं साधु परितोषयति ।

शिवराजविजयो हि नवनवाभूतपूर्वांश्रुतपूर्वपदानाञ्च निधिरस्ति। कतिपयानि पदानि विलोक्यन्ताम्—मौलिवि, मोहरमः, रामयानम्, इष्टका, भ्रमरिका, काचपात्रम्, अष्टापदम्, पालंकी, मज्जितम्, गृङ्कारः, छुरिका, खुरत्रः, आरनालम्, कण्डोलः, पोटलिका, गडगडा, फक्किका च।

शिवराजविजये ये संवादाः समुपस्थापिताः सन्ति तेऽपि संवादानुकूलवाक्ययुक्तत्वात् रामणीयकतां श्रयन्ति। तच्छ्रीरपि निभालनीया—

महादेवः—उद्वाहः कदा भविता ?

संन्यासी—श्वः।

महादेवः—अथ वरयात्रा-समयः कः ?

संन्या०—यातैकयामायां यामिन्याम्।

महा०—कति सहचरा अनुमता नगराधिकारिभिः ?

संन्या०—वादकाद्यतिरिक्तास्त्रिंशत्।

महा०—भद्रम्, वयमपि सह योत्स्यामः।

शिवराजविजये यत् किमपि कथितं तत्र सर्वत्र अमोघा ओजस्विता, चमत्कारकारिणी ऊर्जस्वलता, विचित्रैव वक्रोक्तिः, अद्भुतो भावाभिव्यञ्जनविधिश्च शोभन्ते। पाठकानां श्रोतॄणाञ्च मनांसि सर्वेभ्योऽप्यन्येभ्यः पदार्थेभ्यः प्रसभमाकृष्य शिवराजविजयस्य प्रभावपेशलानि गद्यानि स्वदिशाम्प्रति स्वाभिमतम्प्रति स्वलक्ष्यम्प्रति परमसफलतापूर्वकं नेतुं तानि, सर्वथैव क्षमाणि भवन्ति। न कादम्बर्यां न वासवदत्तायां न दशकुमारचरितेऽपि सा भाव-प्रकटनप्रवीणता दृष्टिपथं याति या अत्र वीक्षिता भवति दिङ्मात्रमिह तस्या विद्युतो लीलालोकेन क्रियतां स्वजीवनं सार्थकम्—

(क) हा भारत ! किं लुण्ठकैरेव भोक्ष्यसे ? हा वसुन्धरे ! किं दीनप्रजानां रक्तैरेव स्नास्यसि ? हा सनातनधर्म ! किं विलयमेव यास्यसि ? हा चातुर्वर्ण्य ! किं कथावशेषमेव भविष्यसि ?

(ख) ......अगणित-फणावलि-फूत्कृतैरिव वीज्यमानो विमल-कमलोदर-सोदर-सौन्दर्याभ्यां कमलकोमलकमला-करतलाभ्यां पादयोः पीड्यमानो निःशङ्कं तस्मिन्नेव कोमलतमवेपे शेषे शेषे। तत् किं जगतः शेषे तव निद्रया भङ्क्ष्यते ? ......तत् किं गजोद्धार-धावन-स्थगितोऽसि ? यन्न धावसि। विप्रशावणहननवनवास-क्रीडितोऽसि ? यन्नावतरसि।

